शब्दादीन्विषयान्भोक्तुं चरितुं दुश्चरं तपः ।
पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥ २५ ॥

शब्देति ॥ किंच । कृष्णादिरूपेण शब्दादीन्विषयान्भोक्तुम् । नरनारायणादिरूपेण दुश्चरं तपश्चरितुम् । तथा दैत्यमर्दनेन प्रजाः पातुम् । औदासीन्येन ताटस्थ्येन वर्तितुं च पर्याप्तः समर्थोऽसि । भोगतपसोः पालनौदासीन्ययोश्च परस्परविरुद्धयोराचरणे त्वदन्यः कः समर्थ इत्यर्थः ॥

बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥ २६ ॥

बहुधेति ॥ आगमैस्त्रयीसांख्यादिभिर्दर्शनैर्बहुधा भिन्ना अपि सिद्धिहेतवः पुरुषार्थसाधकाः पन्थान उपायाः । जाह्नव्या इमे जाह्नवीया गाङ्गाः । 'वृद्धाच्छः' इति छप्रत्ययः । ओघाः प्रवाहाः । तेऽप्यागमैरागतिभिर्बहुधा भिन्नाः सिद्धिहेतवश्च । अर्णव इव त्वय्येव निपतन्ति प्रविशन्ति । येन केनापि रूपेण त्वामेवोपयान्तीत्यर्थः । यथाहुराचार्याः—'किं बहुना कारवोपि विश्वकर्मेत्युपासते' इति ॥

त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।
गतिस्त्वं वीतरागाणामभूयःसंनिवृत्तये ॥ २७ ॥

त्वयीति ॥ त्वय्यावेशितं निवेशितं चित्तं यैस्तेषाम् । तुभ्यं समर्पितानि कर्माणि यैस्तेषाम् । 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि कौन्तेय प्रतिजाने प्रियोऽसि मे' । इति भगवद्वचनात् । वीतरागाणां विरक्तानामभूयःसंनिवृत्तयेऽपुनरावृत्तये । मोक्षायेत्यर्थः । त्वमेव गतिः साधनम् । 'तमेवं विदित्वातिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेरित्यर्थः ॥

प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥ २८ ॥

प्रत्यक्ष इति ॥ प्रत्यक्षः प्रत्यक्षप्रमाणगम्योऽपि तव मह्यादिः पृथिव्यादिर्महिमैश्वर्यमपरिच्छेद्यः । इयत्तया नावधार्यः । आप्तवाग्वेदः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिः । अनुमानं क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवदित्यादिकम् । ताभ्यां साध्यं गम्यं त्वां प्रति का कथा । प्रत्यक्षमपि त्वत्कृतं जगदपरिच्छेद्यम् । तत्कारणमप्रत्यक्षस्त्वमपरिच्छेद्य इति किमु वक्तव्यमित्यर्थः ॥

केवलं स्मरणेनैव[2] पुनासि पुरुषं यतः[3] ।
अनेन वृत्तयः शेषा निवेदितफलास्त्वयि ॥ २९ ॥

केवलमिति ॥ स्मरणेन केवलं कृत्स्नम् । 'केवलः कृत्स्न एकश्च' इति शाश्वतः । पुरुषं स्मर्तारं जनं पुनासि । यतः यदित्यर्थः । अनेन स्मृतिकार्येणैव त्वयि त्वद्विषये याः शेषा अवशिष्टा वृत्तयो दर्शनस्पर्शनादयो व्यापारास्ता निवेदितफला विज्ञापितकार्याः । तव स्मरणस्यैवैतत्फलं दर्शनादीनां तु कियदिति नावधारयाम इति भावः ॥

उदधेरिव रत्नानि तेजांसीव विवस्वतः ।
स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते ॥ ३० ॥

उदधेरिति ॥ उदधे रत्नानीव । विवस्वतस्तेजांसीव । दूराण्यवाङ्मनसगोचराणि ते चरितानि स्तुतिभ्यो व्यतिरिच्यन्ते । निःशेषं स्तोतुं न शक्यन्त इत्यर्थः ॥

अनवाप्तमवाप्तव्यं न ते किंचन विद्यते ।
लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः ॥ ३१ ॥

अनवाप्तमिति ॥ अनवाप्तमप्राप्तम् । अवाप्तव्यं प्राप्तव्यं ते तव किंचन किंचिदपि न विद्यते । नित्यपरिपूर्णत्वादिति भावः । तर्हि किंनिबन्धने जन्मकर्मणी । तत्राह— लोकेति । एको लोकानुग्रह एव ते तव जन्मकर्मणोर्हेतुः । परमकारुणिकस्य ते परार्थैव प्रवृत्तिः । न स्वार्थेत्यर्थः ॥

महिमानं यदुत्कीर्त्य तव संह्रियते वचः ।
श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥ ३२ ॥

महिमानमिति ॥ तव महिमानमुत्कीर्त्य वचः संह्रियत इति । तद्वचः संहरणं श्रमेण वाग्व्यापारश्रान्त्या । अशक्त्या कार्त्स्न्येन वक्तुमशक्यत्वाद्वा । गुणानामियत्तयैतावन्मात्रतया न तेषामानन्त्यादिति भावः ॥

इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥ ३३ ॥

इतीति ॥ इति ते सुरास्तमधोभूतमक्षजमिन्द्रियजं ज्ञानं यस्मिंस्तमधोक्षजम् । विष्णुं । प्रसादयामासुः प्रसन्नं चक्रुः । हि यस्मात्परमेष्ठिनः सर्वोत्तमस्य तस्य देवस्य सा देवैः कृता भूतार्थव्याहृतिर्भूतस्य सत्यस्यार्थस्य व्याहृतिरुक्तिः । 'युक्ते क्ष्मादावृते भूतम्' इत्यमरः । न स्तुतिर्न प्रशंसामात्रम् । महान्तो हि यथाकथंचिन्न सुलभा इति भावः । परमे स्थाने तिष्ठतीति परमेष्ठी । 'परमे कित्' इत्युणादिसूत्रेण तिष्ठतेरिनिः । 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । 'स्थास्थिन्स्थृणाम्' इति वक्तव्यात्षत्वम् ॥

तस्मै कुशलसंप्रश्नव्यञ्जितप्रीतये सुराः ।
भयमप्रलयोद्वेलादाचख्युर्नैर्ऋतोदधेः ॥ ३४ ॥

**तस्मा इति** ॥ सुरा देवाः कुशलस्य संप्रश्नेन व्यञ्जिता प्रकटीकृता प्रीतिर्यस्य तस्मै । लक्षितप्रसादायेत्यर्थः । अन्यथा अनवसरविज्ञप्तिमुखराणामिव निष्फला स्यादिति भावः । तस्मै विष्णवेऽप्रलये प्रलयाभावेऽप्युद्वेलादुन्मर्यादात् । नैर्ऋतो राक्षसः । स एवोदधिः । तस्माद्भयमाचख्युः कथितवन्तः ॥

अथवेलासमासन्नशैलरन्ध्रानुनादिना[1] ।
स्वरेणोवाच भगवान्परिभूतार्णवध्वनिः ॥ ३५ ॥

**अथेति** ॥ अथ वेलायामब्धिकूले समासन्नानां संनिकृष्टानां शैलानां रन्ध्रेषु गह्वरेष्वनुनादिना प्रतिध्वनिमता स्वरेण परिभूतार्णवध्वनिस्तिरस्कृतसमुद्रघोषो भगवानुवाच ॥

पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ।
बभूव कृत[2]संस्कारा चरितार्थैव[3] भारती ॥ ३६ ॥

**पुराणस्येति** ॥ पुराणस्य चिरंतनस्य कवेस्तस्य भगवतो वर्णस्थानेषूरःकण्ठादिषु समीरिता सम्यगुच्चारिता । अत एव कृतः संपादितः संस्कारः साधुत्वस्पष्टतादिप्रयत्नो यस्याः सा भारती वाणी चरितार्था कृतार्था बभूवैव । एवकारस्त्वसंभावनाविपरीतभावनाव्युदासार्थः ॥

बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता ।
निर्यातशेषा चरणाद्गङ्गेवोर्ध्वप्रवर्तिनी ॥ ३७ ॥

**बभाविति** ॥ विभोर्विष्णोर्वदनादुद्गता निःसृता । सदशनज्योत्स्ना दन्तकान्तिसहिता । इदं च विशेषणं धावल्यातिशयार्थम् । अत एव सा भारती । चरणादङ्घ्रेर्निर्याता चासौ शेषा च निर्यातशेषा । निःसृतावशिष्टेत्यर्थः । 'स्त्रियाः पुंवत्–' इत्यनुवर्त्य 'पुंवत्कर्मधारय–' इति पुंवद्भावः । निर्यातशब्दस्य या निर्याता सावशेषा सा गङ्गेवेति सामानाधिकरण्यनिर्वाहः । निर्यातायाः शेषेति विग्रहे पुंवद्भावो दुर्घट एव । ऊर्ध्वप्रवर्तिन्यूर्ध्ववाहिनी गङ्गेव । बभौ । इत्युत्प्रेक्षा । यदाह भगवांस्तदाह—

जाने वो रक्षसाक्रान्तावनुभावपराक्रमौ ।
अङ्गिनां तमसेवोभौ गुणौ प्रथममध्यमौ ॥ ३८ ॥

**जान इति** ॥ हे देवाः, वो युष्माकमनुभावपराक्रमौ महिमपुरुषकारौ रक्षसा

---

१ अनुवादिना; अनुकारिणा. २ पद. ३ इव.

रावणेन । अङ्गिनां शरीरिणां प्रथममध्यमावुभौ गुणौ सत्वरजसी तमसेव तमोगुणेनेव । आक्रान्तौ जाने । वाक्यार्थः कर्म ॥

**विदितं तप्यमानं च तेन मे भुवनत्रयम् ।**
**अकामोपनतेनेव साधोर्हृदयमेनसा ॥ ३९ ॥**

विदितमिति ॥ किंच । अकामेनानिच्छयोपनतेन प्रमादादागतेनैनसा पापेन साधोः सज्जनस्य हृदयमिव । तेन रक्षसा तप्यमानं संतप्यमानम् । तपेर्भौवादिकात्कर्मणि शानच् । भुवनत्रयं च मे विदितम् । मया ज्ञायत इत्यर्थः । 'मतिबुद्धि—' इत्यादिना वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी ॥

**कार्येषु चैककार्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा ।**
**स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ॥ ४० ॥**

कार्येष्विति ॥ किंच । एककार्यत्वादावयोरेककार्यकत्वाद्धेतोः । कार्येषु कर्तव्यार्थेषु विषयेषु वज्रिणेन्द्रेणाभ्यर्थ्यः । इदं कुर्विति प्रार्थनीयो नास्मि । तथाहि । वातः स्वयमेवाग्नेः सारथ्यं साहाय्यं प्रतिपद्यते प्राप्नोति । न तु वह्निप्रार्थनया । इत्येवकारार्थः । प्रेक्षावतां हि स्वार्थेषु स्वत एव प्रवृत्तिः । न तु परप्रार्थनया स्वार्थश्चायं ममापीत्यर्थः ॥

पुरा किल त्रिपुरारिप्रीणनाय स्वशिरांसि छिन्दता दशकंधरेण यद्दशमं शिरोऽवशेषितं तन्मच्चक्रार्थमित्याह—

**स्वासिधारापरिहृतः[1] कामं चक्रस्य तेन मे ।**
**स्थापितो दशमो मूर्धा लभ्यांश इव रक्षसा ॥ ४१ ॥**

स्वेति ॥ स्वासिधारया स्वखड्गधारयापरिहृतः । अच्छिन्न इत्यर्थः । दशमो मूर्धा मे मम चक्रस्य कामं पर्याप्तो लभ्यांशः प्राप्तव्यभाग इव तेन रक्षसा स्थापितः । तत्सर्वथा तमहं हनिष्यामीत्यर्थः ॥

तर्हि किं प्रागुपेक्षितमत आह—

**स्रष्टुर्वरातिसर्गात्तु[2] मया तस्य दुरात्मनः ।**
**अत्यारूढं रिपोः सोढं[3] चन्दनेनेव भोगिनः ॥ ४२ ॥**

स्रष्टुरिति ॥ किंतु स्रष्टुर्ब्रह्मणो वरातिसर्गाद्वरदानाद्धेतोः । मया तस्य दुरात्मनो रिपो रावणस्यात्यारूढमत्यारोहणम् । अतिवृद्धिरित्यर्थः । नपुंसके भावे क्तः । भोगिनः सर्पस्यात्यारूढं चन्दनेनेव । सोढम् । चन्दनद्रुमस्यापि तथा सहनं स्रष्टुर्नियतेरिति द्रष्टव्यम् ॥

---

१ परिवृतः. २ तु. ३ ग्रस्त[illegible]

संप्रति वरस्वरूपमाह —

धातारं तपसा प्रीतं ययाचे स हि राक्षसः ।
दैवात्सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः ॥ ४३ ॥

**धातारमिति** ॥ स राक्षसस्तपसा प्रीतं संतुष्टं धातारं ब्रह्माणम् । मर्त्येषु विषय आस्थापराङ्मुखः सन् । मर्त्याननादृत्येत्यर्थः । दैवादष्टविधात्सर्गाद्दैवसृष्टेरवध्यत्वं ययाचे हि ॥

तर्हि का गतिरित्याशङ्क्य मनुष्यावतारेण हनिष्यामीत्याह—

सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम् ।
करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम् ॥ ४४ ॥

**सोऽहमिति** ॥ सोऽहम् । दशरथस्यापत्यं पुमान्दाशरथिः । 'अत इञ्' इतीञ्प्रत्ययः । रामो भूत्वा तीक्ष्णैः शरैस्तस्य रावणस्य शिरांस्येव कमलानि तेषामुच्चयं राशिं रणभूमेर्बलिक्षमं पूजार्हं करिष्यामि । पुष्पविशदा हि पूजेति भावः ।

अचिराद्यज्वभिर्भागं कल्पितं विधिवत्पुनः ।
मायाविभिरनालीढमादास्यध्वे निशाचरैः ॥ ४५ ॥

**अचिरादिति** ॥ हे देवाः । यज्वभिर्याज्ञिकैर्विधिवत्कल्पितमुपहृतं भागं हविर्भागं मायाविभिर्मायावद्भिः । 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः । निशाचरै रक्षोभिरनालीढमनास्वादितं यथा तथाचिरात्पुनरादास्यध्वे ग्रहीष्यध्वे ॥

वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां पथि ।
पुष्पकालोकसंक्षोभं मेघावरणतत्पराः ॥ ४६ ॥

**वैमानिका इति** ॥ मरुतां देवानां पथि व्योम्नि वैमानिका विमानैश्चरन्तः । 'चरति' इति ठक्प्रत्ययः मेघावरणतत्परा रावणभयान्मेघेष्वन्तर्धानतत्पराः । पुण्यकृतः सुकृतिनः पुष्पकालोकेन यदृच्छया रावणविमानदर्शनेन यः संक्षोभो भयचकितं तं त्यजन्तु । 'संक्षोभो भयचकितम्' इति शब्दार्णवः ॥

मोक्ष्यध्वे स्वर्गबन्दीनां वेणीबन्धानदूषितान् ।
शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः ॥ ४७ ॥

**मोक्ष्यध्व इति** ॥ हे देवाः यूयं शापेन नलकूवरशापेन यन्त्रिताः प्रतिबद्धाः पौलस्त्यस्य रावणस्य बलात्कारेण ये कचग्रहाः केशाकर्षास्तैरदूषिताननुपहतान्स्वर्गबन्दीनां हृतस्वर्गाङ्गनानां वेणीबन्धान्मोक्ष्यध्वे । पुरा किल नलकूवरेणात्मानमभिस-

१ सुरबन्दीनाम्.

रन्त्या रम्भाया बलात्कारेण संभोगात्क्रुद्धेन दुरात्मा रावणः शप्तः । स्त्रीणां बलाद्ग्रहणे मूर्धा ते शतधा भविष्यतीति भारतीया कथानुसंधेया ॥

रावणावग्रहक्लान्तमिति वागमृतेन सः ।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥ ४८ ॥

रावणेति ॥ स कृष्णो विष्णुः स एव मेघो नीलमेघश्च । विश्रवसोऽपत्यं पुमानिति विग्रहे रावणः । विश्रवःशब्दाच्छिवादित्वादणि विश्रवसः 'विश्रवणरवणौ' इत्यन्तर्गणसूत्रेण विश्रवःशब्दस्य वृत्तिविषये रवणादेशे रावण इति सिद्धम् । स एवावग्रहो वर्षप्रतिबन्धः । तेन क्लान्तं म्लानं मरुतो देवा एव सस्यं तत् । इत्येवंरूपेण वागमृतेन वाक्सलिलेन । 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिलेऽमृतम्' इति विश्वः । अभिवृष्याभिषिच्य तिरोदधेऽन्तर्दधे ॥

पुरुहूतप्रभृतयः सुरकार्योद्यतं सुराः ।
अंशैरनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः ॥ ४९ ॥

पुरुहूतेति ॥ पुरुहूतप्रभृतय इन्द्राद्याः सुराः सुरकार्ये रावणवधरूप उद्यतं विष्णुमंशैर्मात्राभिः । द्रुमाः पुष्पैः स्वांशैर्वायुमिव । अनुययुः सुग्रीवादिरूपेण वानरयोनिषु जाता इत्यभिप्रायः ॥

अथ तस्य विशांपत्युरन्ते काम्यस्य कर्मणः ।
पुरुषः प्रबभूवाग्नेर्विस्मयेन सहर्त्विजाम् ॥ ५० ॥

अथेति ॥ अथ तस्य विशां पत्युर्दशरथस्य संबन्धिनः काम्यस्य कर्मणः पुत्रकामेष्टेरन्तेऽवसानेऽग्नेः पावकात्पुरुषः कश्चिद्दिव्यः पुमानृत्विजां विस्मयेन सह प्रबभूव प्रादुर्बभूव । तदाविर्भावात्तेषामपि विस्मयोऽभूदित्यर्थः ॥

तमेव पुरुषं विशिनष्टि—

हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम् ।
अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ॥ ५१ ॥

हेमपात्रेति ॥ आद्यस्य पुंसो विष्णोरनुप्रवेशादधिष्ठानाद्धेतोस्तेन दिव्यपुरुषेणापि दुर्वहम् । चतुर्दशभुवनोदरस्य भगवतो हरेरतिगरीयस्त्वाद्वोढुमशक्यम् । हेमपात्रगतं पयसि पक्वं चरुं पयश्चरुं पायसान्नं दोर्भ्यामादधानो वहन् । 'अनवस्रावितोऽन्तरूष्मपक्व ओदनश्चरुः' इति याज्ञिकाः ॥

प्राजापत्योपनीतं तदन्नं प्रत्यग्रहीन्नृपः ।
वृषेव पयसां सारमाविष्कृतमुदन्वता ॥ ५२ ॥

**प्राजापत्येति** ॥ नृपो दशरथः प्राजापत्येन प्रजापतिसंबन्धिना पुरुषेणोपनीतं न तु वसिष्ठेन । 'प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप' इति रामायणात् । तदन्नं पायसान्नम् । उदन्वतोदधिनाविष्कृतं प्रकाशितं पयसां सारममृतं वृषा वासव इव । 'वासवो वृत्रहा वृषा' इत्यमरः । प्रत्यग्रहीत्स्वीचकार ॥

**अनेन कथिता राज्ञो गुणास्तस्यान्यदुर्लभाः ।**
**प्रसूतिं[1] चकमे तस्मिंस्त्रैलोक्यप्रभवोऽपि यत्[2] ॥ ५३ ॥**

**अनेनेति** ॥ तस्य राज्ञो दशरथस्यान्यैर्दुर्लभा असाधारणा गुणा अनेन कथिता व्याख्याताः । यद्यस्मात्त्रयो लोकास्त्रैलोक्यम् । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । तस्य प्रभवः कारणं विष्णुरपि तस्मिन्राज्ञि प्रसूतिमुत्पत्तिं चकमे कामितवान् । त्रिभुवनकारणस्यापि कारणमिति परमावधिर्गुणसमाश्रय इत्यर्थः ॥

**स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् ।**
**द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ ५४ ॥**

**स इति** ॥ स नृपः चरुसंज्ञास्य संजाता चरुसंज्ञितम् । वैष्णवं तेजः पत्न्योः कौसल्याकैकेय्योः । द्यौश्च पृथिवी च द्यावापृथिव्यौ । 'दिवसश्च पृथिव्याम्' इति चकाराद्दिवुशब्दस्य द्यावादेशः ॥ तयोर्द्यावापृथिव्योः । अह्नः पतिरहर्पतिः । 'अहरादीनां पत्यादिषु वा रेफः' इत्युपसंख्यानाद्वैकल्पिको रेफस्य रेफादेशो विसर्गापवादः । प्रत्यग्रमातपं बालातपमिव । विभेजे । विभज्य ददावित्यर्थः ॥

पत्नीत्रये सति द्वयोरेव विभागे कारणमाह—

**अर्चिता तस्य कौसल्या प्रिया केकयवंशजा ।**
**अतः संभाविता ताभ्यां सुमित्रामैच्छदीश्वरः ॥ ५५ ॥**

**अर्चितेति** ॥ तस्य राज्ञः । कौ पृथिव्यां सलति गच्छतीति कोसलः । 'सल गतौ' । पचाद्यच् । कुशब्दस्य पृषोदरादित्वाद्गुणः । कोसलस्य राज्ञोऽपत्यं स्त्री कौसल्या । 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति ञ्यङ् 'यङश्चाप्' इति चाप् । अत इव सूत्रे निर्देशात्कोसलशब्दो दन्त्यसकारमध्यमः । अर्चिता ज्येष्ठा मान्या । केकयवंशजा कैकेयी । प्रियेष्टा । अतो हेतोरीश्वरो भर्ता नृपः सुमित्रां ताभ्यां कौसल्याकैकेयीभ्यां संभावितां भागदानेन मानितामैच्छदिच्छति स्म । एवं च सामान्यं तिसृणां च भागप्रापणमिति राज्ञ्युचितज्ञता कौशलं च लभ्यते ॥

**ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः ।**
**चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ॥ ५६ ॥**

---

१ प्रवृत्तिम्; निवृत्तिम्. २ यः.

ते इति ॥ बहुज्ञस्य सर्वज्ञस्य । उचितज्ञस्येत्यर्थः । पत्युर्महीक्षितः क्षितीश्वरस्य । विशेषणत्रयेण राज्ञोऽनुसरणीयतामाह । चित्तज्ञे अभिप्रायज्ञे ते उभे पत्न्यौ कौसल्याकैकेय्यौ । चरोर्यावर्धभागौ समभागौ तयोर्यावर्धौ तौ च तौ भागौ चेत्यर्धभागावेकदेशौ । ताभ्यामर्धार्धभागाभ्याम् । 'पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः । तां सुमित्रामयोजतां युक्तां चक्रतुः । अयं च विभागो न रामायणसंवादी । तत्र चरोरर्धं कौसल्याया अवशिष्टार्धं कैकेय्यै शिष्टं पुनः सुमित्राया इत्यभिधानात् । किंतु पुराणान्तरसंवादो द्रष्टव्यः । उक्तं च नारसिंहे—'ते पिण्डप्राशने काले सुमित्रायै महीपतेः । पिण्डाभ्यामल्पमल्पं तु स्वभगिन्यै प्रयच्छतः ।' इति । एवमन्यत्रापि विरोधे पुराणान्तरात्समाधातव्यम् ॥

न चैवं सत्यपीर्ष्या स्यादित्याह—

सा हि[1] प्रणयवत्यासीत्सपत्न्योरुभयोरपि ।
भ्रमरी वारणस्येव मदनिस्यन्दरेखयोः[2] ॥ ५७ ॥

सेति ॥ सा सुमित्रोभयोरपि । समान एकः पतिर्ययोस्तयोः सपत्न्योः । 'नित्यं सपत्न्यादिषु' इति ङीप् । नकारादेशश्च । भ्रमरी भृङ्गाङ्गना वारणस्य गजस्य मदनिस्यन्दरेखयोरिव । गण्डद्वयगतयोरिति भावः । प्रणयवती प्रेमवत्यासीत् । सपत्न्योरित्यत्र समासान्तर्गतस्य पत्युरुपमानं वारणस्येति ॥

ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसंभवः ।
सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः ॥ ५८ ॥

ताभिरिति ॥ ताभिः कौसल्यादिभिः प्रजानां भूत्या अभ्युदयाय । देवस्य विष्णोरंशः संभवः कारणं यस्य स गर्भः । सूर्यस्येमाः सौर्यः । ताभिः सौरीभिः । 'सूर्यतिष्य-' इत्युपधायकारस्य लोपः । अमृता इत्याख्या यासां ताभिः । जलवहनसाम्यान्नाडीभिरिव । नाडीभिर्वृष्टिविसर्जनीभिर्दीधितिभिरपां विकारोऽम्मयो जलमयो गर्भ इव । दध्रे धृतः । जातावेकवचनम् । गर्भा दधिर इत्यर्थः । अत्र यादवः—'तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने । शतत्रयं हिमोत्सर्गे तावद्गर्भस्य सर्जने ॥ आनन्दाश्च हि मेध्याश्च नूतनाः पूतना इति । चतुःशतं वृष्टिवाहास्ताः सर्वा अमृताः स्त्रियः' ॥ इति ॥

सममापन्नसत्त्वास्ता रेजुरापाण्डुरत्विषः ।
अन्तर्गतफलारम्भाः सस्यानामिव संपदः ॥ ५९ ॥

सममिति ॥ समं युगपदापन्ना गृहीताः सत्त्वाः प्राणिनो याभिस्ता आपन्नसत्त्वा

---

१ अपि. २ निष्पन्दलेखयोः.

गर्भिण्यः। 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः। अतएवापाण्डुरत्विष ईषत्पाण्डुरवर्णास्ताः राजपत्न्यः। अन्तर्गता गुप्ताः फलारम्भा फलप्रादुर्भावा यासां ताः सस्यानां संपद इव। रेजुर्बभुः॥

संप्रति तासां स्वप्नदर्शनान्याह—

गुप्तं ददृशुरात्मानं सर्वाः स्वप्नेषु वामनैः।
जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्तिभिः॥ ६०॥

गुप्तमिति॥ सर्वास्ताः स्वप्नेषु। जलजः शङ्खः। जलजासिगदाशार्ङ्गचक्रैर्लाञ्छिता मूर्तयोयेषां तैर्वामनैर्ह्रस्वैः पुरुषैर्गुप्तं रक्षितमात्मानं स्वरूपं ददृशुः॥

हेम²पक्षप्रभाजालं गगने च वि³तन्वता।
⁴उह्यन्ते स्म सुपर्णेन वे⁵गाकृष्टपयोमुचा॥ ६१॥

हेमेति॥ किंचेति चार्थः। हेम्नः सुवर्णस्य पक्षाणां प्रभाजालं कान्तिपुञ्जं वितन्वता विस्तारयता। वेगेनाकृष्टाः पयोमुचो मेघा येन तेन। सुपर्णेन गरुत्मता गरुडेन गगने ता उह्यन्ते स्मोढाः॥

बिभ्रत्या कौ⁶स्तुभन्यासं स्तनान्तरविलम्बिनम्।
⁷पर्युपास्यन्त लक्ष्म्या च पद्मव्यजनहस्तया॥ ६२॥

बिभ्रत्येति॥ किंच। स्तनयोरन्तरे मध्ये विलम्बिनं लम्बमानम्। न्यस्यत इति न्यासः। कौस्तुभ एव न्यासस्तम्। पत्या कौतुकान्न्यस्तम्। कौस्तुभमित्यर्थः। बिभ्रत्या पद्ममेव व्यजनं हस्ते यस्यास्तया लक्ष्म्या पर्युपास्यन्तोपासिताः॥

कृताभिषेकैर्दिव्यायां त्रिस्रोतसि च सप्तभिः।
⁸ब्रह्मर्षिभिः परं ब्रह्म गृणद्भि⁹रुपतस्थिरे॥ ६३॥

कृतेति॥ किंच। दिवि भवायां दिव्यायां त्रिस्रोतस्याकाशगङ्गायां कृताभिषेकैः कृतावगाहैः। परं ब्रह्म वेदरहस्यं गृणद्भिः पठद्भिः सप्तभिर्ब्रह्मर्षिभिः कश्यपप्रभृतिभिरुपतास्थिर उपासांचक्रिरे॥

ताभ्यस्तथाविधान्स्वप्नाञ्छ्रुत्वा प्रीतो हि¹⁰ पार्थिवः।
मेने ¹¹पराध्यमात्मानं गुरुत्वेन जगद्गुरोः॥ ६४॥

ताभ्य इति॥ पार्थिवो दशरथस्ताभ्यः पत्नीभ्यः। 'आख्यातोपयोगे' इत्यपादानत्वात्पञ्चमी। तथाविधानुक्तप्रकारान्स्वप्नाञ्छ्रुत्वा प्रीतः सन्। आत्मानं जगद्गुरोर्विष्णोरपि गुरुत्वेन पितृत्वेन हेतुना परार्ध्यं सर्वोत्कृष्टं मेने हि॥

---

१ खड्गगदा; शङ्खगदा. २ हेमपत्र. ३ विचिन्वता. ४ उह्यमानम्. ५ वेगात्कृष्टपयोमुचा. ६ कौस्तुभं न्यासम्. ७ उपास्यमानम्. ८ महर्षिभिः. ९ समुपस्थितम्. १० अथ. ११ कृतार्थम्.

विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा ।
उवास प्रतिमाचन्द्रः प्रसन्नानामपामिव ॥ ६५ ॥

विभक्तेति ॥ एक एकरूपो विभुर्विष्णुस्तासां राजपत्नीनां कुक्षिषु गर्भेषु । प्रसन्नानां निर्मलानामपां कुक्षिषु प्रतिमाचन्द्रः प्रतिबिम्बचन्द्र इव । अनेकधा विभक्तात्मा सन् । उवास ॥

अथाग्र्यमहिषी राज्ञः प्रसूतिसमये सती ।
पुत्रं तमोपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ ६६ ॥

अथेति ॥ अथ राज्ञो दशरथस्य सती पतिव्रता । अग्र्या चासौ महिषी चाग्र्यमहिषी । कौसल्या । प्रसूतिसमये प्रसूतिकाले । ओषधिर्नक्तं रात्रिसमये तमोऽपहन्तीति तमोपहम् । 'अपे क्लेशतमसोः' इति डप्रत्ययः । ज्योतिरिव । तमोपहं तमोनाशकरं पुत्रं लेभे प्राप ॥

राम इत्यभिरामेण वपुषा तस्य चोदितः ।
नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ॥ ६७ ॥

राम इति ॥ अभिरमतेऽत्रेत्यभिरामं मनोहरम् । अधिकरणार्थे घञ्प्रत्ययः । तेन वपुषा चोदितः प्रेरितो गुरुः पिता दशरथस्तस्य पुत्रस्य जगतां प्रथमं मङ्गलं सुलक्षणं राम इति नामधेयं चक्रे । अभिरामत्वमेव रामशब्दप्रवृत्तिनिमित्तमित्यर्थः ॥

रघुवंशप्रदीपेन तेनाप्रतिमतेजसा ।
रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन् ॥ ६८ ॥

रघ्विति ॥ रघुवंशस्य प्रदीपेन प्रकाशकेन । अप्रतिमतेजसा तेन रामेण रक्षागृहगताः सूतिकागृहगता दीपाः प्रत्यादिष्टाः प्रतिबद्धा इवाभवन् । महादीपसमीपे नाल्पाः स्फुरन्तीति भावः ॥

शय्यागतेन रामेण माता शातोदरी बभौ ।
सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ ६९ ॥

शय्येति ॥ शातोदरी गर्भमोचनात्कृशोदरी माता शय्यागतेन रामेण । सैकते पुलिने योऽम्भोजबलिः पद्मोपहारस्तेन शरदि कृशा जाह्नवी गङ्गेव । बभौ ॥

कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान् ।
जनयित्रीमलंचक्रे यः प्रश्रय इव श्रियम् ॥ ७० ॥

कैकेय्या इति ॥ केकयस्य राज्ञोऽपत्यं स्त्री कैकेयी । 'तस्यापत्यम्' इत्यणि

---

१ प्रभुः. २ अग्रमहिषी. ३ नोदितः. ४ शय्याम्.

कृते 'केकयमित्रयुप्रलयानां यादेरियः' इति यादेशः । तस्या भरतो नाम शीलवांस्तनयो जज्ञे जातः । यस्तनयः । प्रश्रयो विनयः श्रियमिव । जनयित्रीं मातरमलंचक्रे ॥

सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ।
सम्यगाराधिता[1] विद्या प्रबोधविनयाविव ॥ ७१ ॥

**सुताविति** ॥ सुमित्रा लक्ष्मणशत्रुघ्नौ नाम यमौ युग्मजातौ सुतौ पुत्रौ । सम्यगाराधिता स्वभ्यस्ता विद्या प्रबोधविनयौ तत्त्वज्ञानेन्द्रियजयाविव । सुषुवे ॥

निर्दोषमभवत्सर्वमाविष्कृतगुणं जगत् ।
अन्वगादिव हि स्वर्गो गां गतं पुरुषोत्तमम् ॥ ७२ ॥

**निर्दोषमिति** ॥ सर्वं जगद्भूलोको निर्दोषं दुर्भिक्षादिदोषरहितम् । आविष्कृतगुणं प्रकटीकृतारोग्यादिगुणं चाभवत् । अत्रोत्प्रेक्षते—गां भुवं गतमवतीर्णं पुरुषोत्तमं विष्णुं स्वर्गोऽप्यन्वगादिव । स्वर्गो हि गुणवान्निर्दोषश्चेत्यागमः । स्वर्गतुल्यमभूदित्यर्थः ॥

तस्योदये चतुर्मूर्तेः पौलस्त्यचकितेश्वराः ।
विरजस्कैर्नभस्वद्भिर्दिश उच्छ्वसिता इव ॥ ७३ ॥

**तस्येति** ॥ चतुर्मूर्ते रामादिरूपेण चतूरूपस्य सतस्तस्य हरेरुदये सति । पौलस्त्याद्रावणाच्चकिता भीता ईश्वरा नाथा इन्द्रादयो यासां ता दिशश्चतस्रो विरजस्कैरपधूलिभिर्नभस्वद्भिर्वायुभिः । मिषेण । उच्छ्वसिता इव । इत्युत्प्रेक्षा । श्वसेः कर्तरि क्तः । स्वनाथशरणलाभसंतुष्टानां दिशामुच्छ्वासवाता इव वाता ववुरित्यर्थः । चतुर्दिगीशरक्षणं मूर्तिचतुष्टयप्रयोजनमिति भावः ॥

कृशानुरपधूमत्वात्प्रसन्नत्वात्प्रभाकरः[2] ।
रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥ ७४ ॥

**कृशानुरिति** ॥ रक्षसा रावणेन विप्रकृतावपकृतौ । पीडितावित्यर्थः । कृशानुरग्निः प्रभाकरः सूर्यश्च यथासंख्यमपधूमत्वात्प्रसन्नत्वाच्चापविद्धशुचौ निरस्तदुःखाविवास्तामभवताम् ॥

दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।
मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥ ७५ ॥

**दशाननेति** ॥ तत्क्षणं तस्मिन्क्षणे रामोत्पत्तिसमयेराक्षसश्रियोऽश्रुबिन्दवो द-

१ आगमिता. २ दिवाकरः.

शाननकिरीटेभ्यो मणीनां व्याजेन मिषेण पृथिव्यां पर्यस्ताः पतिताः । रामोदये सति तद्वध्यस्य रावणस्य किरीटमणिभ्रंशलक्षणं दुर्निमित्तमभूदित्यर्थः ॥

पुत्रजन्मप्रवेश्यानां[1] तूर्याणां तस्य पुत्रिणः ।
आरम्भं[2] प्रथमं चक्रुर्देवदुन्दुभयो दिवि ॥ ७६ ॥

पुत्रेति ॥ पुत्रिणो जातपुत्रस्य तस्य दशरथस्य पुत्रजन्मनि प्रवेश्यानां प्रवेशयितव्यानाम् । वादनीयानामित्यर्थः । तूर्याणां वाद्यानामारम्भमुपक्रमं प्रथमं दिवि देवदुन्दुभयश्चक्रुः । साक्षात्पितुर्दशरथादपि देवा अधिकं प्रहृष्टा इत्यर्थः ॥

संतानकमयी वृष्टिर्भवने चास्य[3] पेतुषी ।
सन्मङ्गलोपचाराणां सैवादिरचनाभवत् ॥ ७७ ॥

संतानकेति ॥ अस्य राज्ञो भवने संतानकानां कल्पवृक्षकुसुमानां विकारः संतानकमयी वृष्टिश्च पेतुषी पपात । 'क्वसुश्च' इति क्वसुप्रत्ययः । 'उगितश्च' इति ङीप् । सा वृष्टिरेव सन्तः पुत्रजन्मन्यावश्यका ये मङ्गलोपचारास्तेषामादिरचना प्रथमक्रियाभवत् ॥

कुमाराः कृतसंस्कारास्ते धात्रीस्तन्यपायिनः[4] ।
आनन्देनाग्रजेनेव समं ववृधिरे पितुः ॥ ७८ ॥

कुमारा इति ॥ कृताः संस्कारा जातकर्मादयो येषां ते। धात्रीणामुपमातॄणां स्तन्यानि पयांसि पिबन्तीति तथोक्ताः । ते कुमारा अग्रे जातेनाग्रजेन ज्येष्ठेनेव स्थितेन पितुरानन्देन समं ववृधिरे । कुमारवृद्ध्या पिता महान्तमानन्दमवापेत्यर्थः। कुमारजन्मनः प्रागेव जातत्वादग्रजत्वोक्तिरानन्दस्य ॥

स्वाभाविकं विनीतत्वं तेषां विनयकर्मणा[5] ।
मुमूर्छ[6] सहजं तेजो हविषेव हविर्भुजाम् ॥ ७९ ॥

स्वाभाविकमिति ॥ तेषां कुमाराणां संबन्धि स्वाभाविकं सहजं विनीतत्वं विनयकर्मणा शिक्षया । हविर्भुजामग्नीनां सहजं तेजो हविषाज्यादिकेनेव । मुमूर्छ ववृधे । निसर्गसंस्काराभ्यां विनीता इत्यर्थः ॥

परस्पराविरुद्धास्ते तद्रघोरनघं कुलम् ।
अलमुद्द्योतयामासुर्देवारण्यमिवर्तवः ॥ ८० ॥

परस्परेति ॥ परस्परमविरुद्धा अविद्विष्टाः । सौभ्रात्रगुणवन्त इत्यर्थः । ते कुमारास्तत्प्रसिद्धमनघं निष्पापं रघोः कुलम् । ऋतवो वसन्तादयो देवारण्यं नन्दनमिव । सहजविरोधानामप्यृतूनां सहावस्थानसंभावनार्थं देवविशेषणम् । अलमत्यन्तमुद्द्योतयामासुः प्रकाशयामासुः । सौभ्रात्रवन्तःकुलभूषणायन्त इति भावः ॥

---

१ प्रवेशानाम्. २ प्रारम्भम्. ३ तस्य. ४ स्तनपायिनः ५ कर्मणाम्. ६ अमूर्छत.

समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।
तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥ ८१ ॥

**समान इति** ॥ शोभनाः स्निग्धा भ्रातरो येषां ते सुभ्रातरः । 'नद्यृतश्च' इति कन्न भवति । वन्दिते भ्रातुरिति निषेधात् । तेषां भावः सौभ्रात्रम् । युवादित्वादण् । तस्मिन्समाने चतुर्णां तुल्येऽपि यथोभौ रामलक्ष्मणौ प्रीत्या द्वन्द्वं बभूवतुः । तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं द्वौ द्वौ साहचर्येणाभिव्यक्तौ बभूवतुः । 'द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु' इत्यभिव्यक्तार्थे निपातः । क्वचित्कस्यचित्स्नेहो नातिरिच्यत इति भावः ॥

तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कदाचन ।
यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः ॥ ८२ ॥

**तेषामिति** ॥ तेषां चतुर्णां मध्ये द्वयोर्द्वयोः । रामलक्ष्मणयोर्भरतशत्रुघ्नयोश्चेत्यर्थः । यथा वायुविभावस्वोर्वातवह्न्योरिव । चन्द्रसमुद्रयोरिव च । ऐक्यमैकमत्यं कदाचन न बिभिदे । एककार्यत्वं समानसुखदुःखत्वं च क्रमादुपमाद्वयाल्लभ्यते । सहजः सहकारी हि वह्नेर्वायुः । चन्द्रवृद्धौ हि वर्धते सिन्धुस्तत्क्षये च क्षीयत इति ॥

ते प्रजानां प्रजानाथास्तेजसा प्रश्रयेण च ।
मनो जह्रुर्निदाघान्ते श्यामाभ्रा दिवसा इव ॥ ८३ ॥

**त इति** ॥ प्रजानाथास्ते कुमारास्तेजसा प्रभावेण प्रश्रयेण विनयेन च निदाघान्ते ग्रीष्मान्ते । श्यामान्यभ्राणि मेघा येषां ते श्यामाभ्राः । नातिशीतोष्णा इत्यर्थः । दिवसा इव । प्रजानां मनो जह्रुः ॥

स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।
धर्मार्थकाममोक्षाणामवतार इवाङ्गवान्[1] ॥ ८४ ॥

**स इति** ॥ स चतुर्धा । 'संख्याया विधार्थे धा' इत्यनेन धाप्रत्ययः । व्यस्तो विभक्तः पृथिवीपतेर्दशरथस्य प्रसवः संतानः । चतुर्धाङ्गवान्मूर्तिमान्धर्मार्थकाममोक्षाणामवतार इव बभौ ॥

गुणैराराधयामासुस्ते गुरुं गुरुवत्सलाः ।
तमेव चतुरन्तेशं रत्नैरिव महार्णवाः ॥ ८५ ॥

**गुणैरिति** ॥ गुरुवत्सलाः पितृभक्तास्ते कुमारा गुणैर्विनयादिभिर्गुरुं पितरम् । चतुर्णामन्तानां दिगन्तानामीशं चतुरन्तेशम् । 'तद्धितार्थ—' इत्यादिनोत्तरपदसमासः । तं दशरथमेव महार्णवाश्चत्वारो रत्नैरिव । आराधयामासुरानन्दयामासुः ॥

---

१ अङ्गभाक्.

सुरगज इव दन्तैर्भग्नदैत्यासिधारै-
र्नय इव पणबन्धव्यक्तयोगैरुपायैः ।
हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥ ८६ ॥

सुरगज इति ॥ भग्ना दैत्यानामसिधारा यैस्तैश्चतुर्भिर्दन्तैः सुरगज ऐरावत इव । पणबन्धेन फलसिद्ध्या व्यक्तयोगैरनुमितप्रयोगैरुपायैश्चतुर्भिः सामादिभिर्नयो नीतिरिव । युगवद्दीर्घैश्चतुर्भिर्दोर्भिर्भुजैर्हरिर्विष्णुरिव । तदीयैर्हरिसंबन्धिभिरंशैरंशभूतैश्चतुर्भिस्तैः पुत्रैरवनिपतीनां पती राजराजो दशरथश्चकाशे विदिद्युते ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये रामावतारो नाम दशमः सर्गः ।

---

## एकादशः सर्गः ।

रामचन्द्रचरणारविन्दयोरन्तरङ्गचरभृङ्गलीलया ।
तत्र सन्ति हि रसाश्चतुर्विधास्तान्यथारुचि सदैव निर्विश ॥

कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते ॥ १ ॥

कौशिकेनेति ॥ कौशिकेन कुशिकापत्येन विश्वामित्रेणैत्याभ्यागत्य स क्षितीश्वरो दशरथः अध्वरविघातशान्तये यज्ञविघ्नविध्वंसाय । काकपक्षधरं बालकोचितशिखाधरम् । 'बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः' इति हलायुधः । रामं याचितः किल प्रार्थितः खलु । याचेर्द्विकर्मकादप्रधाने कर्मणि क्तः । अप्रधाने दुहादीनामिति वचनात् । नायं बालाधिकार इत्याशङ्क्याह—तेजसां तेजस्विनां वयो बाल्यादि न समीक्ष्यते हि । अप्रयोजकमित्यर्थः । अत्र सर्गे रथोद्धतावृत्तम् । उक्तं च—'रान्नराविह रथोद्धता लगौ' इति ॥

कृच्छ्रलब्धमपि लब्धवर्णभाक्तं[2] दिदेश मुनये सलक्ष्मणम् ।
अप्यसुप्रणयिनां रघोः कुले न व्यहन्यत कदाचिदर्थिता ॥ २ ॥

---

१ चकाशे. २ ऐतिरीयानि.

कृच्छ्रलब्धमिति ॥ लब्धा वर्णाः प्रसिद्धयो यैस्ते लब्धवर्णा विचक्षणाः । 'लब्धवर्णो विचक्षणः' इत्यमरः । तान्भजत इति लब्धवर्णभाक् । विद्वत्सेवीत्यर्थः । स राजा कृच्छ्रलब्धमपि सलक्ष्मणं तं रामं मुनये दिदेशातिसृष्टवान् । तथाहि । असुप्रणयिनां प्राणार्थिनामप्यर्थिता याच्ञा रघोः कुले कदाचिदपि न व्यहन्यत न विहता । न विफलीकृतेत्यर्थः । यैरर्थिभ्यः प्राणा अपि समर्प्यन्ते तेषां पुत्रादित्यागो न विस्मयावह इति भावः ॥

**यावदादिशति पार्थिवस्तयोर्निर्गमाय पुरमार्गसंस्क्रियाम्[1] ।**
**तावदाशु[2] विदधे[3] मरुत्सखैः सा[4] सपुष्पजलवर्षिभिर्घनैः ॥ ३ ॥**

यावदिति ॥ पार्थिवः पृथिवीश्वरस्तयो रामलक्ष्मणयोर्निर्गमाय निष्क्रमणाय पुरमार्गसंस्क्रियां धूलिसंमार्जनगन्धोदकसेचनपुष्पोपहाररूपसंस्कारं यावदादिशत्याज्ञापयति । तावन्मरुत्सखैर्वायुसखैः । अनेन धूलिसंमार्जनं गम्यते । सपुष्पजलवर्षिभिः पुष्पसहितजलवर्षिभिर्घनैः सा मार्गसंस्क्रियाशु विदधे विहिता । एतेन देवकार्यप्रवृत्तयोर्दैवानुकूल्यं सूचितम् ॥

**तौ निदेशकरणोद्यतौ पितुर्धन्विनौ चरणयोर्निपेततुः ।**
**भूपतेरपि तयोः प्रवत्स्यतोर्[5]नम्रयोरुपरि बाष्पबिन्दवः ॥ ४ ॥**

ताविति । निदेशकरणोद्यतौ पित्राज्ञाकरणोद्युक्तौ धन्विनौ धनुष्मन्तौ तौ कुमारौ पितुश्चरणयोर्निपेततुः । प्रणतावित्यर्थः । भूपतेरपि बाष्पबिन्दवः प्रवत्स्यतोः प्रवासं करिष्यतोः । अतएव नम्रयोः प्रणतयोः । 'नमिकम्पि–' इति रप्रत्ययः । तयोरुपरि निपेतुः पतिताः ।

**तौ पितुर्नयनजेन वारिणा किंचिदुक्षितशिखण्डकावुभौ[6] ।**
**धन्विनौ तमृषिमन्वगच्छतां पौरदृष्टिकृतमार्गतोरणौ ॥ ५ ॥**

ताविति ॥ पितुर्नयनजेन वारिणा किंचिदुक्षितशिखण्डकावीषत्सिक्तचूडौ । 'शिखा चूडा शिखण्डः स्यात्' इत्यमरः । 'शेषाद्विभाषा' इति कप्रत्ययः । धन्विनौ तावुभौ । पौरदृष्टिभिः कृतानि मार्गतोरणानि संपाद्यानि कुवलयानि ययोस्तौ तथोक्तौ । संघशो निरीक्ष्यमाणावित्यर्थः । तमृषिमन्वगच्छताम् ॥

**लक्ष्मणानुचरमेव राघवं नेतुमैच्छदृषिरित्यसौ नृपः ।**
**आशिषं प्रयुयुजे न वाहिनीं सा हि रक्षणविधौ तयोः क्षमा ॥ ६ ॥**

लक्ष्मणेति ॥ ऋषिर्लक्ष्मणानुचरमेव लक्ष्मणमात्रानुचरं तं राघवं नेतुमैच्छदिति

१ सत्क्रियाम्. २ तावता. ३ विहिता. ४ सान्द्रपुष्प. ५ प्रयास्यतोः. ६ शिखण्डितौ.

हेतोरसौ नृप आशिषं प्रयुयुजे प्रयुक्तवान् । वाहिनीं सेनां न प्रयुयुजे न प्रेषितवान् । हि यस्मात्साशीरेव तयोः कुमारयो रक्षणविधौ क्षमा शक्ता ॥

मातृवर्गचरणस्पृशौ मुनेस्तौ प्रपद्य पदवीं महौजसः ।
रेजतुर्गतिवशात्प्रवर्तिनौ भास्करस्य मधुमाधवाविव ॥ ७ ॥

मातृवर्गेति ॥ मातृवर्गस्य चरणान्स्पृशत इति मातृवर्गचरणस्पृशौ । कृतमातृवर्गनमस्काराविलर्थः । 'स्पृशोऽनुदके क्विन्' इति क्विन्प्रत्ययः । तौ महौजसो मुनेः पदवीं प्रपद्य । महौजसो भास्करस्य गतिवशान्मेषादिराशिसंक्रान्त्यनुसारात्प्रवर्तिनौ मधुमाधवाविव चैत्रवैशाखाविव रेजतुः । 'फणां च सप्तानाम्' इति वैकल्पिकावेत्त्वाभ्यासलोपौ । 'स्याच्चैत्रे चैत्रिको मधुः' इति । 'वैशाखे माधवो राधः' इति चामरः ॥

वीचिलोलभुजयोस्तयोर्गतं शैशवाच्चपलमप्यशोभत ।
तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृशं विचेष्टितम् ॥ ८ ॥

वीचीति ॥ वीचिलोलभुजयोस्तरंगचञ्चलबाह्वोः । इदं विशेषणं नदोपमानसिद्ध्यर्थं वेदितव्यम् । तयोश्चपलं चञ्चलमपि गतं गतिः शैशवाद्धेतोरशोभत । किमिव । तोयदागमे वर्षासमये । उज्झत्युदकमित्युद्ध्यः । भिनत्ति कूलमिति भिद्यः 'भिद्योद्ध्यौ नदे' इति क्यबन्तौ निपातितौ । उद्ध्यभिद्ययोर्नदविशेषयोर्नामधेयसदृशं नामानुरूपं विचेष्टितमिव उदकोज्झनकूलभेदनरूपव्यापार इव । समयोत्पन्नं चापलमपि शोभत इति भावः ॥

तौ बलातिबलयोः प्रभावतो विद्ययोः पथि मुनिप्रदिष्टयोः ।
मम्लतुर्न मणिकुट्टिमोचितौ मातृपार्श्वपरिवर्तिनाविव ॥ ९ ॥

ताविति ॥ मणिकुट्टिमोचितौ मणिबद्धभूमिसंचारोचितौ तौ मुनिप्रदिष्टयोः कौशिकेनोपदिष्टयोर्बलातिबलयोर्विद्ययोर्बलातिबलाख्ययोर्मन्त्रयोः प्रभावतः सामर्थ्यान्मातृपार्श्वपरिवर्तिनौ मातृसमीपवर्तिनाविव पथि न मम्लतुः । न म्लानावित्यर्थः । अत्र रामायणश्लोकः—'क्षुत्पिपासे न ते राम भविष्येते नरोत्तम । बलामतिबलां चैव पठतः पथि राघव ।' इति ॥

पूर्ववृत्तकथितैः पुराविदः सानुजः पितृसखस्य राघवः ।
उह्यमान इव वाहनोचितः पादचारमपि न व्यभावयत् ॥ १० ॥

पूर्वेति ॥ वाहनोचितः सानुजो राघवः । पुराविदः पूर्ववृत्ताभिज्ञस्य पितृसखस्य

१ वशप्रवर्तिनौ.

मुनेः पूर्ववृत्तकथितैः पुरावृत्तकथाभिरुह्यमान इव वाहनेन प्राप्यमाण इव । वहेर्धातोः कर्मणि शानच् । 'उह्यमानः' इत्यत्र दीर्घादिरपपाठः । दिर्घप्राप्त्यभावात् । पादचारमपि न व्यभावयन्न ज्ञातवान् ॥

तौ सरांसि रसवद्भिरम्बुभिः कूजितैः श्रुतिसुखैः पतत्रिणः ॥
वायवः सुरभिपुष्परेणुभिश्छायया च जलदाः सिषेविरे ॥ ११ ॥

तावितिं ॥ तौ राघवौ कर्मभूतौ सरांसि कर्तृणि रसवद्भिर्मधुरैरम्बुभिः सिषेविरे पतत्रिणः पक्षिणः । सुखयन्तीति सुखानि । पचाद्यच् । श्रुतीनां सुखानि । तैः कूजितैः । वायवः सुरभिपुष्परेणुभिः जलदाश्छायया च । सिषेविर इति सर्वत्र संबध्यते ॥

नाम्भसां कमलशोभिनां[1] तथा शाखिनां च[2] न परिश्रमच्छिदाम् ।
दर्शनेन लघुना यथा तयोः प्रीतिमापुरुभयोस्तपस्विनः ॥ १२ ॥

नेति ॥ तप एषामस्तीति तपस्विनः । 'तपःसहस्राभ्यां विनीनी' इति विनिप्रत्ययः । लघुनेष्टेन । 'त्रिष्विष्टेऽल्पे लघुः' इत्यमरः । तयोरुभयोः । कर्मभूतयोः । दर्शनेन यथा प्रीतिमापुः । तथा कमलशोभिनामम्भसां दर्शनेन नापुः । परिश्रमच्छिदां शाखिनां दर्शनेन च नापुः ॥

स्थाणुदग्धवपुषस्तपोवनं प्राप्य दाशरथिरात्तकार्मुकः ।
विग्रहेण मदनस्य चारुणा सोऽभवत्प्रतिनिधिर्न कर्मणा ॥ १३ ॥

स्थाण्विति ॥ स आत्तकार्मुकः । दशरथस्यापत्यं पुमान्दाशरथी रामः । 'अत इञ्' इतीञ्प्रत्ययः । स्थाणुर्हरः । 'स्याणुः कीले हरे स्थिरे' इति विश्वः । तेन दग्धवपुषो मदनस्य तपोवनं प्राप्य चारुणा विग्रहेण कायेन । 'विग्रहः समरे काये' इति विश्वः । प्रतिनिधिः प्रतिकृतिः सदृशोऽभवत्कर्मणा न पुनः । देहेन मदनसुन्दर इति भावः ॥

तौ सुकेतुसुतया खिलीकृते कौशिकाद्विदितशापया पथि ।
निन्यतुः स्थलनिवेशिताटनी[3] लीलयैव धनुषी अधिज्यताम् ॥ १४ ॥

ताविति ॥ अत्र रामायणवचनम्—'आगस्त्यः परमः क्रुद्धस्ताडकामभिशप्तवान् । पुरुषादी महायक्षी विकृता विकृतानना । इदं रूपमपाहाय दारुणं रूपमस्तु ते ॥' इति । तदेतदाह—विदितशापयेति । कौशिकादाख्यातुः । 'आख्यातोपयोगे' इत्यपादानात्पञ्चमी । विदितशापया सुकेतुसुतया ताडकया खिलीकृते प-

---

१ विकचपङ्कजशोभिनाम्. २ न च. ३ स्थलनिवेशताटनी; स्थलनिवेशिताटिनी.

थि । 'खिलमप्रहतं स्थानम्' इति हलायुधः । तौ रामलक्ष्मणौ । स्थले निवेशिते अटनी धनुःकोटी याभ्यां तौ तथोक्तौ । 'कोटिरस्याटनिः' इत्यमरः । लीलयैव धनुषी । अधिकृते ज्ये मौर्व्यौ ययोस्ते अधिज्ये । 'ज्या मौर्वीमातृभूमिषु' इति विश्वः । तयोर्भावस्तत्तामधिज्यतां निन्यतुर्नीतवन्तौ । नयतिर्द्विकर्मकः ॥

ज्यानिनादम[1]थ गृह्णती तयोः प्रादुरास बहुलक्षपाछविः ।
[2]ताडका चलकपालकुण्डला कालिकेव निबिडा बलाकिनी १५

ज्येति ॥ अथ तयोर्ज्यानिनादं गृह्णती जानती । शृण्वतीत्यर्थः । बहुलक्षपाछविः कृष्णपक्षरात्रिवर्णा । 'बहुलः कृष्णपक्षे च' इति विश्वः । चले कपाले एव कुण्डले यस्याः सा तथोक्ता ताडका । निबिडा सान्द्रा बलाकिनी बलाकावती । 'व्रीह्यादिभ्यश्च' इतीनिः । कालिकेव घनावलीव । 'कालिका योगिनीभेदे कार्ष्ण्ये गौर्यां घनावलौ' इति विश्वः । प्रादुरास प्रादुर्बभूव ॥

तीव्रवेगधुतमार्गवृक्षया प्रेतचीवरवसा स्[3]वनोग्रया ।
अभ्यभावि भरताग्रजस्तया वात्ययेव पितृकाननोत्थया ॥ १६ ॥

तीव्रेति ॥ तीव्रवेगेन धुताः कम्पिता मार्गवृक्षा यया तथोक्तया । प्रेतचीवराणि वस्त इति प्रेतचीवरवाः । तया प्रेतचीवरवसा । वसतेराच्छादनार्थात्क्विप् । स्वनेन सिंहनादेनोग्रया तया ताडकया । पितृकानने श्मशान उत्थोत्पन्ना । 'आतश्चोपसर्गे' इत्युत्पूर्वात्तिष्ठतेः कर्तरि क्तप्रत्ययः । तया वात्ययेव वातसमूहेनेव ॥ 'पाशादिभ्यो यः' इति यः । भरताग्रजो रामोऽभ्यभाव्यभिभूतः । कर्मणि लुङ् । तीव्रवेगेत्यादिविशेषणानि वात्यायामपि योज्यानि ॥

उद्यतैकभुजयष्टिमायतीं श्रोणिलम्बिपुरुषान्त्रमेखलाम् ।
तां विलोक्य वनितावधे घृणां पत्रिणा सह मुमोच राघवः १७

उद्यतेति ॥ उद्यतोन्नमितैको भुज एव यष्टिर्यस्यास्ताम् । आयतीमायान्तीम् । इणो धातोः शतरि 'उगितश्च' इति ङीप् । श्रोणिलम्बिनी पुरुषाणामन्त्राण्येव मेखला यस्यास्ताम् ॥ इति विशेषणद्वयेनाप्याततायित्वं सूचितम् । अतएव तां विलोक्य राघवो वनितावधे स्त्रीवधनिमित्ते घृणां जुगुप्सां करुणां वा । 'जुगुप्साकरुणे घृणे' इत्यमरः । पत्रिणेषुणा सह । 'पत्री रोप इषुर्द्वयोः' इत्यमरः ॥ मुमोच मुक्तवान् । आततायिवधे मनुः—'आततायिनमायान्तं हन्यादेवाविचारयन् । जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन ।' इति ॥

---

१ अनुगृह्णती. २ ताटका. ३ उग्रगन्धया.

यच्चकार विवरं शिलाघने ताडकोरसि[1] स रामसायकः ।
अप्रविष्टविषयस्य रक्षसां द्वारतामगमदन्तकस्य तत् ॥ १८ ॥

यदिति ॥ स रामसायकः शिलावद्धने सान्द्रे ताडकोरसि यद्विवरं रन्ध्रं चकार तद्विवरं रक्षसामप्रविष्टविषयस्य । अप्रविष्टरक्षोदेशस्येत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । 'विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च' इति विश्वः । अन्तकस्य यमस्य द्वारतामगमत् । इयं प्रथमा रक्षोमृतिरिति भावः ॥

बाणभिन्नहृदया निपेतुषी सा स्वकाननभुवं न केवलाम्[2] ।
विष्टपत्रयपराजयस्थिरां रावणश्रियमपि व्यकम्पयत् ॥ १९ ॥

बाणेति ॥ बाणभिन्नहृदया निपेतुषी निपतिता सती । 'क्कसुश्च' इति क्कसुप्रत्ययः । 'उगितश्च' इति ङीप् । सा केवलामेकाम् ॥ 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इत्यमरः । स्वकाननभुवं न व्यकम्पयत् । किंतु विष्टपत्रयस्य लोकत्रयस्य पराजयेन स्थिरां रावणश्रियमपि व्यकम्पयत् । ताडकावधश्रवणेन रावणस्यापि भयमुत्पन्नमिति भावः ॥

अत्र ताडकाया अभिसारिकायाः समाधिरभिधीयते—

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ २० ॥

रामेति ॥ सा । निशासु चरतीति निशाचरी राक्षसी । अभिसारिका च । दुःसहेन सोढुमशक्येन । राम एव मन्मथः । अन्यत्राभिरामो मन्मथः । तस्य शरेण हृदय उरसि मनसि च । 'हृदयं मनउरसोः' इति विश्वः । ताडिता विद्धाङ्गा गन्धवद्दुर्गन्धि यद्रुधिरमसृक्तदेव चन्दनं तेनोक्षिता लिप्ता । अपरत्र गन्धवती सुगन्धिनी ये रुधिरचन्दने कुङ्कुमचन्दने ताभ्यामुक्षिता । 'रुधिरं कुङ्कुमासृजोः' इत्युभयत्रापि विश्वः । जीवितेशस्यान्तकस्य प्राणेश्वरस्य च वसतिं जगाम ॥

नैर्ऋतघ्नमथ मन्त्रवन्मुनेः प्रापदस्त्रमवदानतोषितात् ।
ज्योतिरिन्धननिपाति भास्करात्सूर्यकान्त इव ताडकान्तकः[3] २१

नैर्ऋतेति ॥ अथानन्तरं ताडकान्तको रामः । अवदानं पराक्रमः 'पराक्रमोऽवदानं स्यात्' इति भागुरिः । तेन तोषितान्मुनेः । नैर्ऋतान्राक्षसान्हन्तीति नैर्ऋतघ्नम् । 'अमनुष्यकर्तृके च' इति टक् । मन्त्रवन्मन्त्रयुक्तमस्त्रम् । सूर्यकान्तो मणिविशेषो भास्करादिन्धनानि निपातयतीतीन्धननिपाति काष्ठदाहकं ज्योतिरिव । प्रापत्प्राप्तवान् ॥

---

१ ताटकोरसि. २ केवलम्. ३ ताटकान्तकः.

वामनाश्रमपदं ततः परं पावनं श्रुतमृषेरुपेयिवान् ।
उन्मनाः प्रथमजन्मचेष्टितान्यस्मरन्नपि बभूव राघवः ॥ २२ ॥

**वामनेति** ॥ ततः परं राघवः । ऋषेः कौशिकादाख्यातुः श्रुतं पावनं शोधनं वामनस्य स्वपूर्वावतारविशेषस्याश्रमपदमुपेयिवानुपगतः सन् । 'उपेयिवाननाश्वाननूचानश्च' इति निपातः ॥ प्रथमजन्मचेष्टितानि रामवामनयोरैक्यात्स्मृतियोग्यान्यपि रामस्याज्ञानावतारत्वेन संस्कारदौर्बल्यादस्मरन्नपि । उन्मना उत्सुको बभूव ॥

आससाद मुनिरात्मनस्ततः शिष्यवर्गपरिकल्पितार्हणम् ।
बद्धपल्लवपुटाञ्जलिद्रुमं दर्शनोन्मुखमृगं तपोवनम् ॥ २३ ॥

**आससादेति** ॥ ततो मुनिः । शिष्यवर्गेण परिकल्पिता सज्जितार्हणा पूजासामग्री यस्मिंस्तत्तथोक्तम् । बद्धाः पल्लवपुटा एवाञ्जलयो यैस्ते तथाभूता द्रुमा यस्मिंस्तत्तथोक्तम् । दर्शनेन मुनिदर्शनेनोन्मुखा मृगा यस्मिंस्तत् । आत्मनस्तपोवनमाससाद । एतेन विशेषणत्रयेणातिथिसत्कारताच्छील्यविनयशान्तयः सूचिताः ।

तत्र दीक्षितमृषिं ररक्षतुर्विघ्नतो दशरथात्मजौ शरैः ।
लोकमन्धतमसात्क्रमोदितौ रश्मिभिः शशिदिवाकराविव ॥२४॥

**तत्रेति** ॥ तत्र तपोवने दशरथात्मजौ दीक्षितं दीक्षासंस्कृतमृषिं शरैर्विघ्नतो विघ्नेभ्यः क्रमेण पर्यायेण रात्रिदिवसयोरुदितौ शशिदिवाकरौ रश्मिभिरन्धतमसाद्गाढध्वान्तात् । 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः । 'अवसमन्धेभ्यस्तमसः' इति समासान्तोऽच्प्रत्ययः । लोकमिव । ररक्षतुः । रक्षणप्रवृत्तावभूतामित्यर्थः ॥

वीक्ष्य वेदिमथ रक्तबिन्दुभिर्बन्धुजीवपृथुभिः प्रदूषिताम् ।
संभ्रमोऽभवदपोढकर्मणामृत्विजां च्युतविकङ्कतस्रुचाम् ॥ २५ ॥

**वीक्ष्येति** ॥ अथ बन्धुजीवपृथुभिर्बन्धुजीवकुसुमस्थूलैः । 'रक्तकस्तु बन्धूको बन्धुजीवकः' इत्यमरः । रक्तबिन्दुभिः प्रदूषितामुपहतां वेदिं वीक्ष्य । अपोढकर्मणां त्यक्तव्यापाराणाम् । च्युता विकङ्कतस्रुचो येभ्यस्तेषामृत्विजां याजकानां संभ्रमोऽभवत् । विकङ्कतग्रहणं खदिराद्युपलक्षणम् । स्रुवादीनां खदिरादिप्रकृतिकत्वात् । स्रुगादिपात्रस्यैव विकङ्कतप्रकृतिकत्वात् । 'विकङ्कतः स्रुचां वृक्षः' इत्यमरः । यद्वा स्रुङ्मात्रस्य विकङ्कतप्रकृतिकत्वमस्तु । उभयत्रापि शास्त्रसंभवात् । यथाह भगवानापस्तम्बः— 'खादिरः स्रुवः पर्णमयी जुहूराश्वत्थ्युपभृद्वैकङ्कती ध्रुवा' इति ।

उन्मुखः सपदि लक्ष्मणाग्रजो बाणमाश्रयमुखात्समुद्धरन् ।
रक्षसां बलमपश्यदम्बरे गृध्रपक्षपवनेरितध्वजम् ॥ २६ ॥

---

१ दर्शनोत्सुक.

उन्मुख इति ॥ सपदि लक्ष्मणाग्रजो रामो बाणमाश्रयमुखात्तूणीरमुखात्समुद्धरन् । उन्मुख ऊर्ध्वमुखोऽम्बरे । गृध्रपक्षपवनैरीरिताः कम्पिता ध्वजा यस्य तत्तथोक्तम् । रक्षसां दुर्निमित्तसूचनमेतत् । तदुक्तं शकुनार्णवे—'आसन्नमृत्योर्निकटे चरन्ति गृध्रादयो मूर्ध्नि गृहोर्ध्वभागे' इति । रक्षसां बलमपश्यत् ॥

तत्र यावधिपती मखद्विषां तौ शरव्यमकरोत्स नेतरान् ।
किं महोरगविसर्पिविक्रमो राजिलेषु गरुडः प्रवर्तते ॥ २७ ॥

तत्रेति ॥ स रामस्तत्र रक्षसां बले यौ मखद्विषामधिपती तौ सुबाहुमारीचौ शरव्यं लक्ष्यमकरोत् । 'वेध्यं लक्ष्यं शरव्यं च' इति हलायुधः । इतरान्नाकरोत् । तथाहि । महोरगविसर्पिविक्रमो गरुडो गरुत्मान्राजिलेषु जलव्यालेषु प्रवर्तते किम् । न प्रवर्तत इत्यर्थः । 'अलगर्दो जलव्यालः समौ राजिलडुण्डुभौ' इत्यमरः ॥

सोऽस्त्रमुग्रजवमस्त्रकोविदः संदधे धनुषि वायुदैवतम् ।
तेन शैलगुरुमप्यपातयत्पाण्डुपत्रमिव ताडकासुतम्[1] ॥ २८ ॥

स इति ॥ अस्त्रकोविदोऽस्त्रज्ञः स राम उग्रजवमुत्कटजवं वायुदैवतं वायुर्दैवतं यस्य तद्वायव्यमस्त्रं धनुषि संदधे संहितवान् । कर्तरि लिट् । तेनास्त्रेण शैलवद्गुरुमपि ताडकासुतं मारीचम् । पाण्डुपत्रमिव । परिणतपर्णमिवेत्यर्थः । अपातयत्पातितवान् ॥

यः सुबाहुरिति राक्षसोऽपरस्तत्र तत्र विससर्प[2] मायया ।
तं क्षुरप्रशकलीकृतं कृती पत्रिणां[3] व्यभजदाश्रमाद्बहिः ॥ २९ ॥

य इति ॥ सुबाहुरिति योऽपरो राक्षसस्तत्र तत्र मायया शम्बरविद्यया विससर्प संचचार । क्षुरप्रैः शकलीकृतं खण्डीकृतं तं सुबाहुं कृती कुशलो रामः । 'कृती च कुशलः समौ' इत्यमरः । आश्रमाद्बहिः पत्रिणां पक्षिणाम् । 'पत्रिणौ शरपक्षिणौ' इत्यमरः । व्यभजत् । विभज्य दत्तवानित्यर्थः ॥

इत्यपास्तमखविघ्नयोस्तयोः सांयुगीनमभिनन्द्य विक्रमम् ।
ऋत्विजः कुलपतेर्यथाक्रमं वाग्यतस्य[4] निरवर्तयन्क्रियाः ॥ ३० ॥

इतीति ॥ इत्यपास्तमखविघ्नयोस्तयो राघवयोः । संयुगे रणे साधुः सांयुगीनस्तम् । 'प्रतिजनादिभ्यः खञ्' इति खञ्प्रत्ययः । 'सांयुगीनो रणे साधुः' इत्यमरः । विक्रममभिनन्द्य ऋत्विजो याज्ञिकाः । वाचि यतो वाग्यतो मौनी तस्य कुलपतेर्मुनिकुलेश्वरस्य क्रियाः क्रतुक्रिया यथाक्रमं निरवर्तयन्निष्पादितवन्तः ॥

तौ प्रणामचलकाकपक्षकौ भ्रातरावभृथाप्लुतो[5] मुनिः ।
आशिषामनुपदं समस्पृशद्दर्भपाटिततलेन पाणिना ॥ ३१ ॥

---

१ ताटकासुतम्. २ विससर्ज. ३ पक्षिणाम्. ४ वाग्जितस्य. ५ अवभृतप्लुतः.

तावितिति ॥ अवभृथे दीक्षान्त आप्लुतः स्नातो मुनिः । 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः । प्रणामेन चलकाकपक्षकौ चञ्चलचूडौ तौ भ्रातरावाशिषामनुपदमन्वग्दर्भपाटिततलेन कुशक्षतान्तःप्रदेशेन । पवित्रेणेत्यर्थः । पाणिना समस्पृशत्संस्पृष्टवान् । संतोषादिति भावः ॥

तं न्यमन्त्रयत संभृतक्रतुर्मैथिलः स मिथिलां व्रजन्वशी ।
राघवावपि निनाय बिभ्रतौ तद्धनुःश्रवणजं कुतूहलम् ॥ ३२ ॥

तमिति ॥ संभृतक्रतुः संकल्पितसंभारो मिथिलायां भवो मैथिलो जनकस्तं विश्वामित्रं न्यमन्त्रयताहूतवान् । वशी स मुनिर्मिथिलां जनकनगरीं व्रजंस्तस्य जनकस्य यद्धनुस्तच्छ्रवणजं कुतूहलं बिभ्रतौ राघवावपि निनाय नीतवान् ॥

तैः शिवेषु वसतिर्गताध्वभिः सायमाश्रमतरुष्वगृह्यत ।
येषु दीर्घतपसः परिग्रहो वासवक्षणकलत्रतां ययौ ॥ ३३ ॥

तैरिति ॥ गताध्वभिस्तैस्त्रिभिः सायं शिवेषु रम्येष्वाश्रमतरुषु वसतिः स्थानमगृह्यत । येष्वाश्रमतरुषु दीर्घतपसो गौतमस्य परिग्रहः पत्नी । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः। अहल्येति यावत्। वासवस्येन्द्रस्य क्षणकलत्रतां ययौ॥

प्रत्यपद्यत चिराय यत्पुनश्चारु गौतमवधूः शिलामयी ।
स्वं वपुः स[1] किल किल्बिषच्छिदां[2] रामपादरजसामनुग्रहः ॥३४॥

प्रत्यपद्यतेति ॥ शिलामयी भर्तृशापाच्छिलात्वं प्राप्ता गौतमवधूरहल्या चारु स्वं वपुश्चिराय पुनः प्रत्यपद्यत प्राप्तवती यत् । स किल्बिषच्छिदां पापहारिणाम् । 'पापं किल्बिषकल्मषम्' इत्यमरः । रामपादरजसामनुग्रहः किल प्रसादः किलेति श्रूयते॥

राघवान्वितमुपस्थितं मुनिं[3] तं निशम्य जनको जनेश्वरः ।
अर्थकामसहितं[4] सपर्यया[5] देहबद्धमिव धर्ममभ्यगात् ॥ ३५ ॥

राघवेति ॥ राघवाभ्यामन्वितं युक्तमुपस्थितमागतं तं मुनिं जनको जनेश्वरो निशम्य । अर्थकामाभ्यां सहितं देहबद्धं बद्धदेहम् । मूर्तिमन्तमित्यर्थः । वाहिताग्न्यादित्वात्साधुः । धर्ममिव । सपर्ययाभ्यगात्प्रत्युद्गतवान् ॥

तौ विदेहनगरीनिवासिनां गां गताविव दिवः पुनर्वसू ।
मन्यते स्म पिबतां विलोचनैः पक्ष्मपातमपि वञ्चनां मनः ॥३६॥

ताविति ॥ दिवः सुरवर्त्मन आकाशात् । 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः । गां भुवं गतौ । 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः'

१ या. २ सकलकल्मषच्छिदाम्. ३ ऋषिम्. ४ सहितः. ५ स पर्ययात्.

इत्यमरः। पुनर्वसू इव तन्नामकनक्षत्राधिदेवते इव स्थितौ । तौ राघवौ विलोचनैः पिबताम्। अत्यास्थया पश्यतामित्यर्थः। विदेहनगरी मिथिला। तन्निवासिनां मनः कर्तृ पक्ष्मपातं निमेषमपि तद्दर्शनप्रतिबन्धकत्वाद्वञ्चनां विडम्बनां मन्यते स्म मेने 'लट् स्मे' इति भूतार्थे लट्॥

यूपवत्यवसिते क्रियाविधौ कालवित्कुशिकवंशवर्धनः।
राममिष्वसनदर्शनोत्सुकं मैथिलाय कथयांबभूव सः॥ ३७॥

यूपेति॥ यूपवति क्रियाविधौ कर्मानुष्ठाने । क्रतावित्यर्थः। अवसिते समाप्ते सति कालविदवसरज्ञः कुशिकवंशवर्धनः स मुनी रामम् । अस्यतेऽनेनेत्यसनम्। इषूणामसनमिष्वसनं चापम्। तस्य दर्शन उत्सुकं मैथिलाय जनकाय कथयांबभूव कथितवान्॥

तस्य वीक्ष्य ललितं वपुः शिशोः पार्थिवः प्रथितवंशजन्मनः।
स्वं विचिन्त्य च धनुर्दुरानमं[1] पीडितो दुहितृशुल्कसंस्थया॥३८॥

तस्येति॥ पार्थिवो जनकः। प्रथितवंशे जन्म यस्य तस्य तथोक्तस्य। एतेन वरसंपत्तिरुक्ता। शिशोस्तस्य रामस्य ललितं कोमलं वपुर्वीक्ष्य। स्वं स्वकीयं दुरानमम् आनमयितुमशक्यम्। नमेर्ण्यन्तात्खल्। धनुर्विचिन्त्य च दुहितृशुल्कं कन्यामूल्यं जामातृदेयम्। 'शुल्कं घट्टादिदेये स्याज्जामातुर्बन्धकेऽपि च'। इति विश्वः। तस्य धनुर्भङ्गरूपस्य संस्थया स्थित्या। 'संस्था स्थितौ शरे नाशे' इति विश्वः। पीडितो बाधितः। शिशुना रामेण दुष्करमिति दुःखित इति भावः॥

अब्रवीच्च भगवन्मतङ्गजैर्यद्बृहद्भिरपि कर्म दुष्करम्।
तत्र नाहमनुमन्तुमुत्सहे मोघवृत्ति कलभस्य चेष्टितम्[2]॥ ३९॥

अब्रवीदिति॥ अब्रवीच्च। मुनिमिति शेषः। किमिति। हे भगवन्मुने, बृहद्भिर्मतंगजैर्महागजैरपि दुष्करं यत्कर्म तत्र कर्मणि कलभस्य बालगजस्य । 'कलभः करिशावकः' इत्यमरः। मोघवृत्ति व्यर्थव्यापारं चेष्टितं साहसमनुमन्तुमहं नोत्सहे॥

ह्रेपिता हि बहवो नरेश्वरास्तेन तात धनुषा धनुर्भृतः।
ज्यानिघातकठिनत्वचो भुजान्स्वान्विधूय धिगिति प्रतस्थिरे ४०

ह्रेपिता इति॥ हे तात, तेन धनुषा बहवो धनुर्भृतो नरेश्वरा ह्रेपिता ह्रियं प्रापिता हि। जिह्रेतेर्धातोर्ण्यन्तात्कर्मणि क्तः। 'आर्तिह्री–' इत्यादिना पुगागमः। ते नरेश्वरा ज्यानिघातैः कठिनत्वचः स्वान्भुजान्धिगिति विधूयावमत्य प्रतस्थिरे प्रस्थिताः॥

---

१ दुरासदम्. २ साहसम्.

प्रत्युवाच तमृषिर्निशम्यतां सारतोऽयमथवा गिरा[1] कृतम्।
चाप एव भवतो भविष्यति व्यक्तशक्तिरशनिर्गिराविव ॥ ४१ ॥

प्रतीति ॥ ऋषिस्तं प्रत्युवाच। किमिति। अयं रामः सारतो बलेन निशम्यतां श्रूयताम्। अथवा गिरा सारवर्णनया कृतमलम्। गीर्न वक्तव्येत्यर्थः। 'युगपर्याप्तयोः कृतम्' इत्यमरः। अव्ययं चैतत्। 'कृतं निवारणनिषेधयोः' इति गणव्याख्याने। गिरेति करणे तृतीया। निषेधक्रियां प्रति करणत्वात्। किंत्वशनिर्वज्रो गिराविव। चापे धनुष्येव भवतस्तव व्यक्तशक्तिर्दृष्टसारो भविष्यति ॥

[2]एवमाप्तवचनात्स पौरुषं काकपक्षकधरेऽपि राघवे।
श्रद्दधे त्रिदशगोप[3]मात्रके दाहशक्तिमिव कृष्णवर्त्मनि ॥ ४२ ॥

एवमिति ॥ एवमाप्तस्य मुनेर्वचनात्स जनकः काकपक्षकधरे बालेऽपि राघवे पुरुषस्य कर्म पौरुषं पराक्रमम्। 'हायनान्तयुवादिभ्योऽण्' इति युवादित्वादण्। 'पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसि' इति विश्वः। त्रिदशगोप इन्द्रगोपकीटः प्रमाणमस्य त्रिदशगोपमात्रः। 'प्रमाणे द्वयसच्–' इत्यादिना मात्रच्प्रत्ययः। ततः स्वार्थे कप्रत्ययः। तस्मिन्कृष्णवर्त्मनि वह्नौ दाहशक्तिमिव। श्रद्दधे विश्वस्तवान् ॥

व्यादिदेश[4] गणशोऽथ[5] पार्श्वगान्कार्मुकाभिहरणाय[6] मैथिलः।
तैजसस्य धनुषः प्रवृत्तये तोयदानिव सहस्रलोचनः ॥ ४३ ॥

व्यादिदेशेति ॥ अथ मैथिलः पार्श्वगान्पुरुषान्कार्मुकाभिहरणाय कार्मुकमानेतुम्। 'तुमर्थाच्च–' इति चतुर्थी। सहस्रलोचन इन्द्रस्तैजसस्य तेजोमयस्य धनुषः प्रवृत्तय आविर्भावाय तोयदान्मेघानिव गणान्गणशः। 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्प्रत्ययः। व्यादिदेश प्रजिघाय ॥

तत्प्रसुप्तभुजगेन्द्रभीषणं वीक्ष्य[7] दाशरथिराददे धनुः।
विद्रुतक्रतुमृगानुसारिणं येन बाणमसृजद्वृषध्वजः ॥ ४४ ॥

तदिति ॥ दाशरथी रामः प्रसुप्तभुजगेन्द्र इव भीषणं भयंकरं तद्धनुर्वीक्ष्याददे जग्राह। वृषो ध्वजश्चिह्नं यस्य स शिवो येन धनुषा। क्रतुरेव मृगः। विद्रुतं पलायितं क्रतुमृगमनुसरति। ताच्छील्ये णिनिः। तं विद्रुतक्रतुमृगानुसारिणं बाणमसृजन्मुमोच ॥

[8]आततज्यमकरोत्स[9] संसदा विस्मयस्तिमितनेत्रमीक्षितः।
शैलसारमपि नातियत्नतः पुष्पचापमिव पेशलं[10] स्मरः ॥ ४५ ॥

---

१ कृतं गिरा. २ इत्थम्. ३ गोपलाञ्छने. ४ आदिदेश. ५ सः. ६ कार्मुकस्य हरणाय. ७ प्रेक्ष्य
८ आत्तसज्जम्. ९ च. १० कोमलम्.

आततेति ॥ स रामः संसदा सभया विस्मयेन स्तिमिते नेत्रे यस्मिन्कर्मणि तद्यथा स्यात्तथेक्षितः सन् । शैलस्येव सारो यस्य तच्छैलसारमपि धनुः । स्मरः पेशलं कोमलं पुष्पचापमिव । नातियत्नतो नातियत्नात् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । आततज्यमधिज्यमकरोत् ॥

भज्यमानमतिमात्रकर्षणात्तेन वज्रपरुषस्वनं धनुः ।
भार्गवाय दृढमन्यवे पुनः क्षत्रमुद्यतमिव न्यवेदयत् ॥ ४६ ॥

भज्यमानमिति ॥ तेन रामेणातिमात्रकर्षणाद्भज्यमानमतएव वज्रपरुषस्वनम् । वज्रमिव परुषः स्वनो यस्य तत् । धनुः कर्तृ दृढमन्यवे दृढक्रोधाय । 'मन्युः क्रोधे क्रतौ दैन्ये' इति विश्वः । भार्गवाय क्षत्रं क्षत्रकुलं पुनरुद्यतं न्यवेदयदिव ज्ञापयामासेव ॥

दृष्टसारमथ रुद्रकार्मुके वीर्यशुल्कमभिनन्द्य मैथिलः ।
राघवाय तनयामयोनिजां[1] रूपिणीं श्रियमिव[2] न्यवेदयत्[3] ॥४७॥

दृष्टेति ॥ अथ मैथिलो जनको रुद्रकार्मुके दृष्टः सारः स्थिरांशो यस्य तद्दृष्टसारम् । 'सारो बले स्थिरांशे च' इति विश्वः । वीर्यमेव शुल्कम् । धनुर्भङ्गरूपमित्यर्थः । अभिनन्द्य राघवाय रामायायोनिजां देवयजनसंभवां तनयां सीतां रूपिणीं श्रियमिव साक्षाल्लक्ष्मीमिव न्यवेदयदर्पितवान् । वाचेति शेषः ॥

उक्तमेवार्थं सोपस्कारमाह—

मैथिलः सपदि सत्यसंगरो राघवाय तनयामयोनिजाम् ।
संनिधौ द्युतिमतस्तपोनिधेरग्निसाक्षिक इवातिसृष्टवान् ॥ ४८ ॥

मैथिल इति ॥ सत्यसंगरः सत्यप्रतिज्ञः । 'अथ प्रतिज्ञाजिसंविदापत्सु संगरः' इत्यमरः। मैथिलो राघवायायोनिजां तनयां द्युतिमतस्तेजस्विनस्तपोनिधेः कौशिकस्य संनिधौ । अग्निः साक्षी यस्य सोऽग्निसाक्षिकः । 'शेषाद्विभाषा' इति कप्प्रत्ययः । स इव । सपद्यतिसृष्टवान्दत्तवान् ॥

प्राहिणोच्च महितं महाद्युतिः कोसलाधिपतये पुरोधसम् ।
भृत्यभावि दुहितुः परिग्रहाद्दिश्यतां[6] कुलमिदं निमेरिति ॥ ४९ ॥

प्राहिणोदिति ॥ महाद्युतिर्जनको महितं पूजितं पुरोधसं पुरोहितं कोसलाधिपतये दशरथाय प्राहिणोत्प्रहितवांश्च । किमिति । निमिर्नाम जनकानां पूर्वजः कश्चित् । इदं निमेः कुलं दुहितुः सीतायाः परिग्रहात्स्नुषात्वेन स्वीकाराद्धेतोः । भृत्यस्य भावो भृत्यत्वम् । सोऽस्यास्तीति भृत्यभावि दिश्यतामनुमन्यतामिति ॥

---

१ पार्थिवः; स्वां ददौ. २ इति. ३ अमरद्युतिः; ४ अग्निसाक्षिकम्. ५ महाद्युतिम्.
६ [illegible]

अन्वियेष सदृशीं स च स्नुषां प्राप चैनमनुकूलवाग्द्विजः ।
सद्य[1] एव सुकृतां हि पच्यते कल्पवृक्षफलधर्मि[2] काङ्क्षितम् ॥ ५० ॥

अन्वियेषेति ॥ स दशरथश्च सदृशीमनुरूपां स्नुषामन्वियेष । रामविवाहमाचकाङ्क्षेत्यर्थः । अनुकूलवाक्स्नुषासिद्धिरूपानुकूलार्थवादी द्विजो जनकपुरोधाश्चैनं दशरथं प्राप । तथाहि । कल्पवृक्षफलस्य यो धर्मः सद्यःपाकरूपः सोऽस्यास्तीति कल्पवृक्षफलधर्मि । अतः सुकृतां पुण्यकारिणां काङ्क्षितं मनोरथः सद्य एव पच्यते हि । कर्मकर्तरि लट् । स्वयमेव पक्वं भवतीत्यर्थः । 'कर्मवत्कर्मणा तुल्यक्रियः' इति कर्मवद्भावात् 'भावकर्मणोः' इत्यात्मनेपदम् ॥

तस्य कल्पितपुरस्क्रियाविधेः शुश्रुवान्वचनमग्रजन्मनः ।
उच्चचाल बलभित्सखो वशी[3] सैन्यरेणुमुषितार्कदीधितिः ॥ ५१ ॥

तस्येति ॥ बलभित्सख इन्द्रसहचरो वशी स्वाधीनतावान् । 'वश आयत्ततायां च' इति विश्वः । कल्पितपुरस्क्रियाविधेः कृतपूजाविधेस्तस्याग्रजन्मनो द्विजस्य वचनं जनकेन संदिष्टं शुश्रुवाञ्छ्रुतवान् । शृणोतेः क्वसुः । सैन्यरेणुमुषितार्कदीधितिः सन्नुच्चचाल प्रतस्थे ॥

आससाद मिथिलां स वेष्टयन्पीडितोपवनपादपां[4] बलैः ।
प्रीतिरोधमसहिष्ट सा पुरी स्त्रीव कान्तपरिभोगमायतम् ॥ ५२ ॥

आससादेति ॥ स दशरथो बलैः सैन्यैः पीडितोपवनपादपां मिथिलां वेष्टयन्परिधीकुर्वन् । आससाद । सा पुरी । स्त्री युवतिरायतमतिप्रसक्तं कान्तपरिभोगं प्रियसंभोगमिव प्रीत्या रोधं प्रीतिरोधमसहिष्ट सोढवती । द्वेषरोधं तु न सहत इति भावः ॥

तौ समेत्य समये[5] स्थितावुभौ भूपती वरुणवासवोपमौ ।
कन्यकातनयकौतुकक्रियां स्वप्रभावसदृशीं वितेनतुः ॥ ५३ ॥

ताविति ॥ समये स्थितावाचारनिष्ठौ । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । वरुणवासवावुपमोपमानं ययोस्तौ तथोक्तौ । तावुभौ भूपती जनकदशरथौ समेत्य स्वप्रभावसदृशीमात्ममहिमानुरूपां कन्यकानां सीतादीनां तनयानां रामादीनां च कौतुकक्रियां विवाहोत्सवं वितेनतुर्विस्तृतवन्तौ । तनोतेर्लिट् ॥

पार्थिवीमुदवहद्रघूद्वहो[6] लक्ष्मणस्तदनुजामथोर्मिलाम् ।
यौ तयोरवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे ॥ ५४ ॥

---

१ सत्यम्. २ कल्पवृक्षसमधर्मकाङ्क्षितम्. ३ बली. ४ पादपैः. ५ समयस्थितौ. ६ मैथिलीम्.

**पार्थिवीमिति** ॥ उद्वहतीत्युद्वहः। पचाद्यच्। रघूणामुद्वहो रघूद्वहो रामः। पृथिव्या अपत्यं स्त्री पार्थिवी। 'तस्यापत्यम्' इत्यणि 'टिड्ढा—' इति ङीप्। तां सीतामुदवहत्परिणीतवान्। अथ लक्ष्मणस्तस्याः सीताया अनुजां जनकस्यौरसीमूर्मिलामुदवहत्। यौ वरौजसौ तयो रामलक्ष्मणयोरवरजावनुजातौ भरतशत्रुघ्नौ तौ सुमध्यमे कुशध्वजस्य जनकानुजस्य सुते कन्यके माण्डवीं श्रुतकीर्तिं चोदवहताम्। नात्र व्युत्क्रमविवाहदोषो भिन्नोदरत्वात्। तदुक्तम्—'पितृव्यपुत्रे सापत्न्ये परनारीसुतेषु च। विवाहाधानयज्ञादौ परिवेत्ताद्यदूषणम्' इति ॥

**ते चतुर्थसहितास्त्रयो बभुः सूनवो नववधूपरिग्रहाः[1]।**
**सामदानविधिभेदनिग्रहाः सिद्धिमन्त इव तस्य भूपतेः ॥ ५५ ॥**

**त इति** ॥ ते चतुर्थसहितास्त्रयः। चत्वार इत्यर्थः। वृत्तानुसारादेवमुक्तम्। सूनवो नववधूपरिग्रहाः। सिद्धिमन्तः फलसिद्धियुक्तास्तस्य भूपतेर्दशरथस्य सामदानविधिभेदनिग्रहाश्चत्वार उपाया इव। बभुः। विधीयत इति विधिः। दानमेव विधिः। निग्रहो दण्डः। सूनूनामुपायैर्वधूनां सिद्धिभिश्चौपम्यमित्यनुसंधेयम् ॥

**ता नराधिपसुता[2] नृपात्मजैस्ते च ताभिरगमन्कृतार्थताम्।**
**सोऽभवद्वरवधूसमागमः प्रत्ययप्रकृतियोगसंनिभः ॥ ५६ ॥**

**ता इति** ॥ ता नराधिपसुता जनककन्यका नृपात्मजैर्दशरथपुत्रैः कृतार्थतां कुलशीलवयोरूपादिसाफल्यमगमन्। ते च ताभिस्तथा। किंच स वराणां वधूनां च समागमः। प्रत्ययानां प्रकृतीनां च योग इव। संनिभातीति संनिभः। अभवत्। पचाद्यच्। प्रत्ययाः सनादयो येभ्यो विधीयन्ते ताः प्रकृतयः। यथा प्रकृतिप्रत्यययोः सहैकार्थसाधनत्वं तद्वदत्रापीति भावः ॥

**एवमात्तरतिरात्मसंभवांस्तान्निवेश्य चतुरोऽपि तत्र सः।**
**अध्वसु त्रिषु विसृष्टमैथिलः स्वां पुरीं दशरथो न्यवर्तत ॥ ५७ ॥**

**एवमिति** ॥ एवमात्तरतिरनुरागवान्स दशरथस्तांश्चतुरोऽप्यात्मसंभवान्पुत्रांस्तत्र मिथिलायां निवेश्य विवाह्य। 'निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्तितः' इति विश्वः। त्रिष्वध्वसु प्रयाणेषु सत्सु विसृष्टमैथिलः सन्। स्वां पुरीं न्यवर्तत। उद्देशक्रियापेक्षया कर्मत्वं पुर्याः ॥

**तस्य जातु मरुतः प्रतीपगा वर्त्मसु[3] ध्वजतरुप्रमाथिनः।**
**चिक्लिशुर्भृशतया वरूथिनीमुत्तटा इव नदीरयाः स्थलीम् ॥ ५८ ॥**

**तस्येति** ॥ जातु कदाचिद्वर्त्मसु ध्वजा एव तरवस्तान्प्रमथ्नन्ति ये ते ध्वजतरुप्र-

१ परिग्रहात. २ च पार्थिवसुताः. ३ वर्त्मनि.

किमितीति ॥ आत्मनो निर्वादोऽपवाद एव कथा तां किमुपेक्षे । उत अदोषां साध्वीं जायां संत्यजामि । उभयत्रापि प्रश्ने लट् । इत्येकपक्षाश्रयेऽन्यतरपक्षपरिग्रहे विक्लवत्वादपरिच्छेत्तृत्वात्स रामो दोलेव चला चित्तवृत्तिर्यस्य स आसीत् ॥

निश्चित्य चानन्यनिवृत्ति वाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत् ।
अपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीयः ॥३५॥

निश्चित्येति ॥ किंच । वाच्यमपवादम् । नास्त्यन्येन त्यागातिरिक्तोपायेन निवृत्तिर्यस्य तदनन्यनिवृत्ति । निश्चित्य पत्न्यास्त्यागेन परिमार्ष्टुं परिहर्तुमैच्छत् । तथाहि । यशोधनानां पुंसां स्वदेहादपि यशो गरीयो गुरुतरम् । इन्द्रियार्थात्स्रक्चन्दनवनितादेरिन्द्रियविषयाद्गरीय इति किमुत वक्तव्यम् । 'पञ्चमी विभक्ते' इत्युभयत्रापि पञ्चमी । सीता चेन्द्रियार्थ एव ॥

स संनिपात्यावरजान्हतौजास्तद्विक्रियादर्शनलुप्तहर्षान् ।
कौलीनमात्माश्रयमाचचक्षे तेभ्यः पुनश्चेदमुवाच वाक्यम् ॥ ३६ ॥

स इति ॥ हतौजा निस्तेजस्कः स रामस्तस्य रामस्य विक्रियादर्शनेन लुप्तहर्षानवरजान्संनिपात्य संगमय्यात्माश्रयं स्वविषयकं कौलीनं निन्दा तेभ्य आचचक्षे । पुनरिदं वाक्यमुवाच ॥

राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य ॥ ३७ ॥

राजर्षीति ॥ रवेः प्रसूतिर्जन्म यस्य तस्य राजर्षिवंशस्य सदाचारशुचेः सद्वृत्ताच्छुद्धान्मत्तो मत्सकाशात् । दर्पणस्य पयोदवातादिव । अम्भःकणादित्यर्थः । कीदृशोऽयं कलङ्क उपस्थितः प्राप्तः पश्यत ॥

पौरेषु सोऽहं बहुलीभवन्तमपां तरंगेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं [2]स्थाणुमिव द्विपेन्द्रः[1] ॥ ३८ ॥

पौरेष्विति ॥ सोऽहम् । अपां तरंगेषु तैलबिन्दुमिव । पौरेषु बहुलीभवन्तं प्रसरन्तम् । स एव पूर्वो यस्य स तम् । तत्पूर्वमवर्णमपवादम् । 'अवर्णाक्षेपनिर्वादपरीवादापवादवत्' इत्यमरः । द्विपेन्द्रः । आलानमेवालानिकम् । विनयादित्वात्स्वार्थे ठक् । अथवालानं बन्धनं प्रयोजनमस्येत्यालानिकम् । 'प्रयोजनम्' इति ठक् । स्थाणुं स्तम्भमिव । चूतवृक्ष इतिवत्सामान्यविशेषभावादपौनरुक्त्यं द्रष्टव्यम् । सोढुं नेशे न शक्नोमि ॥

---

१ महौजाः. २ स्तम्भम्.

तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव ॥ ३९ ॥

तस्येति ॥ तस्यावर्णस्यापनोदाय फलप्रवृत्तावपत्योत्पत्तावुपस्थितायां सत्यामपि निर्व्यपेक्षो निःस्पृहः सन् । वैदेहसुताम् । पुरस्तात्पूर्वं पितुराज्ञया समुद्रनेमिम् । समुद्रो नेमिरिव नेमिर्यस्याः सा भूमिः । तामिव । त्यक्ष्यामि ॥

ननु सर्वथा साध्वी न त्याज्येत्यत्राह—

अवैमि चैनामनघेति किंतु लोकापवादो बलवान्मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ४०

अवैमीति ॥ एनां सीतामनघा साध्वीति चावैमि । किंतु मे मम लोकापवादो बलवान्मतः । कुतः । हि यस्मात्प्रजाभिर्भूमेश्छाया प्रतिबिम्बं शुद्धिमतो निर्मलस्य शशिनो मलत्वेन कलङ्कत्वेनारोपिता । अतो लोकापवाद एव बलवानित्यर्थः ॥

रक्षोवधान्तो न च मे प्रयासो व्यर्थः स वैरप्रतिमोचनाय ।
अमर्षणः शोणितकाङ्क्षया किं पदा स्पृशन्तं दशति द्विजिह्वः ४१

रक्ष इति ॥ किंच । मे रक्षोवधान्तः प्रयासो व्यर्थो न । किंतु स वैरप्रतिमोचनाय वैरशोधनाय । तथाहि । अमर्षणोऽसहनो द्विजिह्वः सर्पः पदा पादेन स्पृशन्तं पुरुषं शोणितकाङ्क्षया दशति किम् । किंतु वैरनिर्यातनायेत्यर्थः ॥

तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः ।
यद्यर्थिता निर्हृतवाच्यशल्यान्प्राणान्मया धारयितुं चिरं वः ॥४२॥

तदिति ॥ तत्तस्मादेष मे सर्गो निश्चयः । 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमरः । करुणार्द्रचित्तैर्भवद्भिर्न प्रतिषेधनीयः । निर्हृतं वाच्यमेव शल्यं येषां तान्प्राणान्मया चिरं धारयितुं धारणं कारयितुं वो युष्माकमर्थितार्थित्वमिच्छा यदि । अस्तीति शेषः ॥

इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशमीशम् ।
न कश्चन भ्रातृषु तेषु शक्तो निषेद्धुमासीदनुमोदितुं वा ॥४३॥

इतीति ॥ इत्युक्तवन्तं जनकात्मजायां विषये नितान्तरूक्षाभिनिवेशमतिक्रूराग्रहमीशं स्वामिनं तेषु भ्रातृषु मध्ये कश्चनापि निषेद्धुं निवारयितुमनुमोदितुं प्रवर्तयितुं वा शक्तो नासीत् । पक्षद्वयस्यापि प्रबलत्वादित्यर्थः ॥

स लक्ष्मणं लक्ष्मणपूर्वजन्मा विलोक्य लोकत्रयगीतकीर्तिः ।
सौम्येति चाभाष्य यथार्थभाषी स्थितं निदेशे पृथगादिदेश ॥४४॥

१ मलत्वे निरूपिता. २ निर्गत. ३ अनुवर्तितुम्.

स इति ॥ लोकत्रयगीतकीर्तिर्यथार्थभाषी लक्ष्मणपूर्वजन्मा लक्ष्मणाग्रजः स रामो निदेशे स्थितमाज्ञाकारिणं लक्ष्मणं विलोक्य 'हे सौम्य सुभग' इत्याभाष्य च पृथग्भरतशत्रुघ्नाभ्यां विनाकृत्यादिदेशाज्ञापयामास ॥

प्रजावती दो[१]हदशंसिनी ते [२]तपोवनेषु स्पृहयालुरे व ।
सत्वं रथी तद्व्यपदेशनेयां प्रापय्य वाल्मीकिपदं त्यजैनाम् ॥४५॥

प्रजावतीति ॥ दोहदो गर्भिणीमनोरथः । तच्छंसिनी ते प्रजावती भ्रातृजाया । 'प्रजावती भ्रातृजाया' इत्यमरः । तपोवनेषु स्पृहयालुरेव सस्पृहेव । 'स्पृहिगृहि–' इत्यादिनालुच्प्रत्ययः । स त्वं रथी सन् । तद्व्यपदेशेन दोहदमिषेण नेयां नेतव्यामेनां सीतां वाल्मीकेः पदं स्थानं प्रापय्य गमयित्वा । 'विभाषापः' इत्ययादेशः । त्यज ॥

स शुश्रुवान्मातरि भार्गवेण पितुर्नियो[३]गात्प्रहृतं द्विषद्वत् ।
प्रत्यग्रहीदग्रजशासनं तदाज्ञा गुरूणां ह्य[४]विचारणीया ॥ ४६ ॥

स इति ॥ पितुर्जमदग्नेर्नियोगाच्छासनाद्भार्गवेण जामदग्न्येयेन कर्त्रा । 'न लोक–' इत्यादिना षष्ठीप्रतिषेधः । मातरि द्विषतीव द्विषद्वत् । 'तत्र तस्येव' इति वतिप्रत्ययः । प्रहृतं प्रहारं शुश्रुवाञ्श्रुतवान् । 'भाषायां सदवसश्रुवः' इति क्वसुप्रत्ययः । स लक्ष्मणस्तदग्रजशासनं प्रत्यग्रहीत् । हि यस्माद्गुरूणामाज्ञाविचारणीया ॥

अथानुकूलश्रवणप्रतीतामत्रस्नुभिर्युक्तधुरं तुरंगैः ।
रथं सुमन्त्रप्रतिपन्नरश्मिमारोप्य वैदेहसुतां प्रतस्थे ॥ ४७ ॥

अथेति ॥ अथासौ लक्ष्मणः । अनुकूलश्रवणेन प्रतीतामिष्टाकर्णनेन तुष्टां वैदेहसुतामत्रस्नुभिरभीरुभिर्गर्भिणीवहनयोग्यैः । 'त्रसिगृधिधृषिक्षिपेः क्नुः' इतिक्नुप्रत्ययः तुरंगैर्युक्तधुरं सुमन्त्रेण प्रतिपन्नरश्मिं गृहीतप्रग्रहं रथमारोप्य प्रतस्थे ॥

सा नीयमाना रु[६]चिरान्प्रदेशान्प्रियंकरो मे प्रिय इत्यनन्दत् ।
नाबुद्ध कल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम् ॥ ४८ ॥

सेति ॥ सा सीता रुचिरान्प्रदेशान्नीयमाना प्राप्यमाणा सती मे मम प्रियः प्रियं करोतीति प्रियंकरः प्रियकारीत्यनन्दत् । 'क्षेमप्रियमद्रेऽण्च' इति चकारात्खच्प्रत्ययः । तं प्रियमात्मनि विषये कल्पद्रुमतां विहायासिपत्रवृक्षं जातं नाबुद्ध नाज्ञासीत् । बुध्यतेर्लुङ् । असिपत्रः खड्गाकारदलः कोऽप्यपूर्वो वृक्षविशेषः । 'असिपत्रो भवेत्कोषाकारे च नरकान्तरे' इति विश्वः । आसन्नघातुक इति भावः ॥

१ दौर्हृद. २ तपोवनेभ्यः. ३ निदेशात्. ४ विशङ्क्य. ५ तु. ६ रुचिरप्रदेशान्.

जुगूह[1] तस्याः पथि लक्ष्मणो यत्सव्येतरेण स्फुरता तदक्ष्णा ।
आख्यातमस्यै गुरु भावि दुःखमत्यन्तलुप्तप्रिय[2]दर्शनेन ॥ ४९ ॥

जुगूहेति ॥ पथि लक्ष्मणो यद्दुःखं तस्याः सीताया जुगूह प्रतिसंहृतवांस्तद्गुरु भावि भविष्यद्दुःखमत्यन्तलुप्तं प्रियदर्शनं यस्य तेन स्फुरता सव्येतरेण दक्षिणेनाक्ष्णास्यै सीताया आख्यातम् । स्त्रीणां दक्षिणाक्षिस्फुरणं दुर्निमित्तमाहुः ॥

सा दुर्निमित्तोप[3]गताद्विषादात्सद्यः परिम्लानमु[4]खारविन्दा ।
राज्ञः शिवं सावरजस्य भूयादित्याशशंसे करणैरबाह्यैः ॥ ५० ॥

सेति ॥ सा सीता दुर्निमित्तेन दक्षिणाक्षिस्फुरणरूपेणोपगतात्प्राप्ताद्विषादाद्दुःखात्सद्यः परिम्लानमुखारविन्दा सती सावरजस्य सानुजस्य राज्ञो रामस्य शिवं भूयादिबाह्यैः करणैरन्तःकरणैराशशंसे । शंसतेरपेक्षायामात्मनेपदमिष्यते । करणैरिति बहुवचनं क्रियावृत्त्याभिप्रायम् । पुनः । पुनराशशंस इत्यर्थः ॥

गुरो[5]र्नि[6]योगाद्व[7]नितां वनान्ते साध्वीं सुमित्रातनयो विहास्यन् ।
[8]अवार्यतेवोत्थि[9]तवीचिहस्तैर्जह्नोर्दुहित्रा स्थितया पुरस्तात् ॥ ५१ ॥

गुरोरिति ॥ गुरोर्ज्येष्ठस्य नियोगात्साध्वीं वनिताम् । अत्याज्यामित्यर्थः । वनान्ते विहास्यंस्त्यक्ष्यन्सुमित्रातनयो लक्ष्मणः पुरस्तादग्रे स्थितया जह्नोर्दुहित्रा जाह्नव्योत्थितैर्वीचिहस्तैरवार्यतेव । अकार्यं मा कुर्वित्यवार्यतेव इत्युत्प्रेक्षा ॥

रथात्स[10] यन्त्रा निगृतवाहात्तां भ्रातृजायां पुलिनेऽवतार्य ।
गङ्गां निषादाहृतनौविशेषस्ततार संधामिव सत्यसंधः ॥ ५२ ॥

रथादिति ॥ सत्यसंधः सत्यप्रतिज्ञः स लक्ष्मणो यन्त्रा सारथिना निगृहीतवाहाद्रुद्धाश्वाद्रथाद्भ्रातृजायां पुलिनेऽवतार्यारोप्य निषादेन किरातेनाहृतनौविशेष आनीतदृढनौकः सन् गङ्गां भागीरथीम् । संधां प्रतिज्ञामिव ततार। संधा 'प्रतिज्ञा मर्यादा' इत्यमरः ॥

अथ व्यवस्थापितवाक्कथंचित्सौमित्रिरन्तर्गतबाष्पकण्ठः ।
औत्[11]पातिकं मेघ इवाश्मवर्षं महीपतेः शासनमुज्जगार ॥ ५३ ॥

अथेति ॥ अथ कथंचिद्व्यवस्थापिता प्रकृतिमापादिता वाग्येन सः अन्तर्गतबाष्पः कण्ठो यस्य सः। कण्ठस्तम्भिताश्रुरित्यर्थः ।सौमित्रिर्महीपतेः शासनम् । मेघ उत्पाते

१ जुगोप. २ प्रियचुम्बनेन; प्रियचन्दनेन. ३ उपगमात्. ४ मुखारविन्दम्. ५ भ्रातुः. २ निदेशात्. ७ अपि ताम्; दयिताम्. ८ न्यवार्यत. ९ उच्छ्रित; उद्धृत. १० स यन्तृप्रतिपन्नवाहात्; सुमन्त्रप्रतिपन्नवाहात्. ११ औत्पतिकः.

भवमौत्पातिकमश्मवर्षं शिलावर्षमिव । उज्जगारोद्गीर्णवान् । दारुणत्वेनावाच्यत्वादुज्जगारेत्युक्तम् ॥

ततो[1]ऽभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना ।
स्वमूर्तिलाभप्रकृतिं धरत्रीं लतेव सीता सहसा जगाम ॥ ५४ ॥

तत इति ॥ ततः । अभिषङ्गः पराभवः । 'शापे त्वभिषङ्गः पराभवः' इत्यमरः । स एवानिलस्तेन विप्रविद्धा अभिहता । प्रभ्रश्यमानानि पतन्त्याभरणान्येव प्रसूनानि यस्याः सा सीता लतेव । सहसा स्वमूर्तिलाभस्य स्वशरीरलाभस्य स्वोत्पत्तेः प्रकृतिं कारणं धरित्रीं जगाम । भूमौ पपातेत्यर्थः । स्त्रीणामापदि मातैव शरणमिति भावः ॥

इक्ष्वाकुवंशप्रभवः कथं त्वां त्यजेदकस्मात्पतिरार्य[2]वृत्तः ।
इति[3] क्षितिः संशयि[4]तेव तस्यै ददौ प्रवेशं जननी न तावत् ॥५५॥

इक्ष्वाकिति ॥ इक्ष्वाकुवंशप्रभवः । महाकुलप्रसूतिरित्यर्थः । आर्यवृत्तः साधुचरितः पतिर्भर्ता त्वामकस्मादकारणात्कथं त्यजेत् । असंभावितमित्यर्थः । इति संशयितेव संदिहानेव तावत् । त्यागहेतुज्ञानावधेः प्रागित्यर्थः । जननी क्षितिस्तस्यै सीतायै प्रवेशम् । आत्मनीति शेषः । न ददौ ॥

सा लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः ।
तस्याः सुमित्रात्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः ॥५६॥

सेति ॥ लुप्तसंज्ञा नष्टचेतना मूर्छिता सा दुःखं न विवेद । प्रत्यागतासुर्लब्धसंज्ञा सत्यन्तः समतप्यत । दुःखेनादह्यतेत्यर्थः । तपेः कर्मणि लङ् । कर्मकर्तरीति केचित् । तन्न । 'तपस्तपःकर्मकस्यैव' इति यङ्नियमात् । तस्याः सीतायाः सुमित्रात्मजयत्नलब्धः प्रबोधो मोहात्कष्टतरोऽतिदुःखदोऽभूत् । दुःखवेदनासंभवादिति भावः ॥

न चावदद्भर्तुरवर्णमार्या निराकरिष्णोर्वृजिनादृतेऽपि ।
आत्मानमेव स्थिरदुःखभाजं पुनः पुनर्दुष्कृतिनं निनिन्द ॥५७॥

न चेति ॥ आर्या साध्वी सा सीता वृजिनादृत एनसो विनापि । 'कलुषं वृजिनैनोऽघम्' इत्यमरः । 'अन्यारादितरर्ते–' इत्यादिना पञ्चमी । निराकरिष्णोर्निरासकस्य । 'अलंकृञ्–' इत्यादिनेष्णुच्प्रत्ययः । भर्तुरवर्णमपवादं न चावदन्नैवावादीत् । किंतु स्थिरदुःखभाजमतएव दुष्कृतिनमात्मानं पुनः पुनर्निनिन्द ॥

आश्वास्य रामावरजः सतीं तामाख्यातवाल्मीकिनिकेतमार्गः ।
निघ्नस्य मे भर्तृनिदेशरौक्ष्यं[6] देवि क्षमस्वेति बभूव नम्रः ॥५८॥

१ अभिषङ्गानलविप्रवृद्धा. २ आर्यवृत्तिः. ३ इत्थम्. ४ संशयति. ५ स सीताम्. ६ भ्रातृनिदेशरौक्ष्यम्; भर्तृनिदेशरूक्षम्; भर्तृनिदेशरौक्षम्.

आश्वास्येति ॥ रामावरजो लक्ष्मणः सतीं साध्वीं तामाश्वास्य । आख्यात उपदिष्टो वाल्मीकेर्निकेतस्याश्रमस्य मार्गो येन स तथोक्तः सन् । निघ्नस्य पराधीनस्य । 'अधीनो निघ्न आयत्तः' इत्यमरः । मे भर्तृनिदेशेन स्वाम्यनुज्ञया हेतुना यद्रौक्ष्यं पारुष्यं तद्धे देवि, क्षमस्व । इति नम्रः प्रणतो बभूव ॥

सीता तमुत्थाप्य जगाद वाक्यं प्रीतास्मि ते सौम्य[1] चिराय जीव।
बिडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ॥५९॥

सीतेति ॥ सीता तं लक्ष्मणमुत्थाप्य वाक्यं जगाद । किमिति । हे सौम्य साधो, ते प्रीतास्मि । चिराय चिरं जीव । यद्यस्मात् । बिडौजसेन्द्रेण विष्णुरुपेन्द्र इव । अग्रजेन ज्येष्ठेन भ्रात्रा त्वमित्थं परवान्परतन्त्रोऽसि ॥

श्वश्रूजनं सर्वमनुक्रमेण विज्ञापय[2] प्रापितमत्प्रणामः ।
प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति ॥ ६० ॥

श्वश्रूजनमिति ॥ सर्वं श्वश्रूजनमनुक्रमेण प्रापितमत्प्रणामः सन् । मत्प्रणाममुक्त्वेत्यर्थः । विज्ञापय । किमिति । निषिच्यत इति निषेकः । मयि वर्तमानं सूनोस्त्वत्पुत्रस्य प्रजानिषेकं गर्भं चेतसानुध्यायत शिवमस्त्विति चिन्तयतेति ॥

वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्[3]सदृशं कुलस्य ॥६१॥

वाच्य इति ॥ स राजा त्वया मद्वचनान्मद्वचनमिति कृत्वा । ल्यब्लोपे पञ्चमी । वाच्यो वक्तव्यः । किमित्यत आह 'वह्नौ' इत्यादिभिः सप्तभिः श्लोकैः—अक्ष्णोः समीपे समक्षम् । विभक्त्यर्थेऽव्ययीभावः सामीप्यार्थे वा । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तष्टच्प्रत्ययः । समक्षमग्रे वह्नौ विशुद्धामपि मां लोकवादस्य मिथ्यापवादस्य श्रवणाद्धेतोरहासीरत्याक्षीरिति यत्तच्छ्रुतस्य प्रख्यातस्य कुलस्य सदृशं किम् । किंत्वसदृशमित्यर्थः । यद्वा श्रुतस्य श्रवणस्य कुलस्य चेति योजना । कामचार्यसीति भावः ॥

कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥ ६२ ॥

कल्याणेति ॥ अथवा कल्याणबुद्धेः सुधियस्तव कर्तुः मयि विषयेऽयं त्यागो न कामचार इच्छया करणं न शङ्कनीयः । कामचारशङ्कापि न क्रियत इत्यर्थः । किंतु ममैव जन्मान्तरपातकानामप्रसह्यो विपच्यत इति विपाकः फलित एव विस्फूर्जथुरशनिनिर्घोषः । 'स्फूर्जथुर्वज्रनिर्घोषः' इत्यमरः ॥

---

१ वत्स. २ विज्ञापयेः. ३ ते.

उपस्थितां पूर्वमपास्य लक्ष्मीं वनं यया सार्धमसि प्रपन्नः ।
तदास्पदं[1] प्राप्य तयातिरोषात्[2]सोढास्मि न त्वद्भवने[3] वसन्ती ॥६३॥

उपस्थितामिति ॥ पूर्वमुपस्थितां प्राप्तां लक्ष्मीमपास्य मया सार्धं वनं प्रपन्नोऽसि प्राप्तोऽसि । तत्तस्मात्तया लक्ष्म्यातिरोषात्त्वद्भवनं आस्पदं प्रतिष्ठाम् । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । प्राप्य वसन्त्यहं सोढा नास्मि ॥

निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात् ।
भूत्वा शरण्या शरणार्थमन्यं[4] कथं प्रपत्स्ये त्वयि दीप्यमाने[5] ॥६४॥

निशाचरेति ॥ निशाचरैरुपप्लुताः पीडिता भर्तारो यासां ता निशाचरोपप्लुतभर्तृकाः । 'नद्यृतश्च' इति कप्प्रत्ययः । तासां तपस्विनीनां भवतः प्रसादादनुग्रहाच्छरण्या शरणसमर्था भूत्वा । अद्य त्वयि दीप्यमाने प्रकाशमाने सत्येव शरणार्थमन्यं तपस्विनं कथं प्रपत्स्ये प्राप्स्यामि ॥

किंवा तवात्यन्तवियोगमोघे कुर्यामुपेक्षां[6] हतजीवितेऽस्मिन् ।
स्याद्रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः ॥ ६५ ॥

किंवेति ॥ किंवाथवा तव संबन्धिनात्यन्तेन पुनःप्राप्तिरहितेन वियोगेन मोघे निष्फलेऽस्मिन्हतजीविते तुच्छजीवित उपेक्षां कुर्यां कुर्यामेव । रक्षणीयं रक्षणार्हमन्तर्गतं कुक्षिस्थं त्वदीयं तेजः शुक्रं गर्भरूपम् 'शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च' इत्यमरः । मे ममान्तरायो विघ्नो न स्याद्यदि ॥

साहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितं यतिष्ये ।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ॥६६॥

सेति ॥ साहं प्रसूतेरूर्ध्वं सूर्यनिविष्टदृष्टिः सती तथाविधं तपश्चरितुं यतिष्ये । यथा भूयस्तेन तपसा मे मम जननान्तरेऽपि त्वमेव भर्ता स्याः विप्रयोगश्च न स्यात् ॥

नृपस्य वर्णाश्रमपालनं[7] यत्स एव धर्मो मनुना प्रणीतः ।
निर्वासिताप्येवमतस्त्वयाहं तपस्विसामान्यमवेक्षणीया ॥ ६७ ॥

नृपस्येति ॥ वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां च पालनं यत्स एव नृपस्य धर्मो मनुना प्रणीत उक्तः । अतः कारणादेवं त्वया निर्वासिता निष्कासिताप्यहं तपस्विभिः सामान्यं साधारणं यथा भवति तथावेक्षणीया । कलत्रदृष्ट्यभावेऽपि वर्णाश्रमदृष्टिः सीतायां कर्तव्येत्यर्थः ॥

---

१ त्वय्यास्पदम्. २ अनुरोषात्; तु रोषात्. ३ त्वद्भुवने. ४ अन्याम्. ५ वर्तमाने. ६ अपेक्षाम्. ७ निबद्ध. ८ तथा. ९ रक्षणम्.

तथेति तस्याः प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते ।
सा मुक्तकण्ठं व्यसनातिभाराच्चक्रन्द विग्ना कुररीव भूयः ॥ ६८ ॥

तथेति ॥ तथेति तस्याः सीताया वाचं प्रतिगृह्याङ्गीकृत्य रामानुजे लक्ष्मणे दृष्टिपथं व्यतीतेऽतिक्रान्ते सति सा सीता व्यसनातिभाराद्दुःखातिरेकान्मुक्तकण्ठं यथा तथा । वाग्वृत्त्येत्यर्थः । विग्ना भीता कुररीवोत्क्रोशीव । 'उत्क्रोशकुररौ समौ' इत्यमरः । भूयो भूयिष्ठं चक्रन्द चुक्रोश ॥

नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान्विजहुर्हरिण्यः ।
तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि ॥ ६९ ॥

नृत्यमिति ॥ मयूरा नृत्यं विजहुस्त्यक्तवन्तः । वृक्षाः कुसुमानि । हरिण्य उपात्तान्दर्भान् । इत्थं तस्याः सीतायाः समदुःखभावं प्रपन्ने तुल्यदुःखत्वं प्राप्ते वनेऽप्यत्यन्तं रुदितमासीत् । यथा रामगेहेऽपीत्यपिशब्दार्थः ॥

तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः ।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥७०॥

तामिति ॥ कुशेध्माहरणाय यातः कविर्वाल्मीकी रुदितानुसारी संस्तां सीतामभ्यगच्छत् । अभिगमनं च दयालुतयेत्याह—निषादेति । निषादेन व्याधेन विद्धस्याण्डजस्य क्रौञ्चस्य दर्शनेनोत्थ उत्पन्नो यस्य शोकः श्लोकत्वमापद्यत । श्लोकरूपेणावोचदित्यर्थः । स च श्लोकः पठ्यते—'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥' इति तिरश्चामपि दुःखं न सेहे । किमुतान्येषामिति भावः ॥

तमश्रु नेत्रावरणं प्रमृज्य सीता विलापाद्विरता ववन्दे ।
तस्यै मुनिर्दोहदलिङ्गदर्शी दाश्वान्सुपुत्राशिषमित्युवाच ॥७१॥

तमिति ॥ सीता विलापाद्विरता सती नेत्रावरणं दृष्टिप्रतिबन्धकमश्रु प्रमृज्य तं मुनिं ववन्दे । दोहदलिङ्गदर्शी गर्भचिह्नदर्शी मुनिस्तस्यै सीतायै सुपुत्राशिषं तत्प्राप्तिहेतुभूतां दाश्वान्दत्तवानिति वक्ष्यमाणप्रकारेणोवाच । 'दाश्वान्साह्वान्मीढ्वांश्च' इति क्वस्वन्तो निपातः ॥

जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा ।
तन्मा व्यथिष्ठा विषयान्तरस्थं प्राप्तासि वैदेहि पितुर्निकेतम् ॥७२॥

---

१ समुक्तकण्ठम्. २ व्यग्रा. ३ नृत्तम्. ४ भृङ्गाः. ५ अत्यर्थम्. ६ प्रलापात्. ७ दौर्हृद. ८ दत्वा. ९ वने.

जान इति ॥ त्वां मिथ्यापवादेन क्षुभितेन भर्त्रा विसृष्टां त्यक्तां प्रणिधानतः समाधिदृष्ट्या जाने । हे वैदेहि, विषयान्तरस्थं देशान्तरस्थं पितुर्जनकस्यैव निकेतं गृहं प्राप्तासि । तत्तस्मान्मा व्यथिष्ठा मा शोचीः । व्यथेर्लुङ् । 'न माङ्योगे' इत्यडागमप्रतिषेधः । भर्त्रोपेक्षितानां पितृगृहवास एवोचित इति भावः ॥

उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि ।
त्वां प्रत्यकस्मात्कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे ॥ ७३ ॥

उत्खातेति ॥ उत्खातलोकत्रयकण्टकेऽपि । रावणादिकण्टकोद्धरणेन सर्वलोकोपकारिण्यपीत्यर्थः । सत्यप्रतिज्ञे सत्यसंधेऽपि । अविकत्थनेऽनात्मश्लाघिन्यपि । इत्थं स्नेहपात्रेऽपि त्वां प्रत्यकस्मादकारणात्कलुषप्रवृत्तौ गर्हितव्यापारे भरताग्रजे मे मन्युः कोपोऽस्त्येव । सर्वगुणाच्छादकोऽयं दोष इत्यर्थः । सीतानुनयार्थोऽयं रामोपालम्भः ॥

तवोरुकीर्तिः[1] श्वशुरः सखा मे सतां भवोच्छेदकरः[2] पिता ते ।
धुरि स्थिता त्वं पतिदेवतानां[3] किं तन्न येनासि ममानुकम्प्या ७४

तवेति ॥ उरुकीर्तिस्तव श्वशुरो दशरथो मे सखा । ते पिता जनकः सतां विदुषां भवोच्छेदकरो ज्ञानोपदेशादिना संसारदुःखध्वंसकारी । त्वं पतिदेवतानां पतिव्रतानां धुर्यग्रे स्थिता । येन निमित्तेन ममानुकम्प्यानुग्राह्या नासि तत्किम् । न किंचिदित्यर्थः ॥

तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन् ।
इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते ॥ ७५ ॥

तपस्वीति ॥ तपस्विसंसर्गेण विनीतसत्त्वे शान्तजन्तुकेऽस्मिंस्तपोवने वीतभया निर्भीका वस । इतोऽस्मिन्वनेऽनघप्रसूतेः सुखप्रसूतेस्तेऽपत्यसंस्कारमयो जातकर्मादिरूपो विधिरनुष्ठानं भविष्यति ॥

अशून्यतीरां मुनिसंनिवेशैस्तमोपहन्त्रीं तमसां वगाह्य[4] ।
तत्सैकतोत्सङ्गबलिक्रियाभिः संपत्स्यते ते मनसः प्रसादः[5] ॥ ७६ ॥

अशून्येति ॥ संनिविशन्ते येष्विति संनिवेशा उटजाः । अधिकरणार्थे घञ्प्रत्ययः । मुनीनां संनिवेशैरुटजैरशून्यतीरां पूर्णतीरां तमसः शोकस्य पापस्य वापहन्त्रीम् । 'तमस्तु क्लीबे पापे नरकशोकयोः' इत्यमरः । तमसां नदीं वगाह्य तत्र स्नात्वा । बलिक्रियापेक्षया पूर्वकालता । तस्याः सैकतोत्सङ्गेषु बलिक्रियाभिरिष्टदेवतापूजाविधिभिस्ते मनसः प्रसादः संपत्स्यते भविष्यति ॥

---

१ इन्दुकीर्तिः. २ भवच्छेदकरः. ३ पितृदेवतानाम्. ४ विगाह्य. ५ अभिलाषः.

पुष्पं फलं चार्तवमाहरन्त्यो बीजं च [1]बालेयमकृष्टरोहि ।
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ७७

पुष्पमिति ॥ ऋतुरस्य प्राप्त आर्तवम् । स्वकालप्राप्तमित्यर्थः । पुष्पं फलं च । अकृष्टरोह्यकृष्टक्षेत्रोत्थम् । अकृष्टपच्यमित्यर्थः । बलये हितं बालेयं पूजायोग्यम् । 'छदिरुपधिबलेर्ढञ्' इति ढञ्प्रत्ययः । बीजं नीवारादि धान्यं चाहरन्त्य उदारवाचः प्रगल्भगिरो मुनिकन्यका नवाभिषङ्गां नूतनदुःखां त्वां विनोदयिष्यन्ति ॥

पयोघटैराश्रमबालवृक्षान्संवर्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक्तनयोपपत्तेः स्तनंधय[2]प्रीतिमवाप्स्यसि त्वम् ॥७८॥

पय इति ॥ स्वबलानुरूपैः स्वशक्त्यनुसारिभिः पयसामम्भसां घटैः । स्तन्यैरिति च ध्वन्यते । आश्रमबालवृक्षान्संवर्धयन्ती त्वं तनयोपपत्तेः प्राक्पूर्वमसंशयं यथा तथा । स्तनं धयति पिबतीति स्तनंधयः शिशुः । 'नासिकास्तनयोर्ध्माधेटोः' इति खश्प्रत्ययः । 'अरुर्द्विषत्–' इत्यादिना मुमागमः । तस्मिन्या प्रीतिस्तामवाप्स्यसि । ततः परं सुलभ एव विनोद इति भावः ॥

[3]अनुग्रहप्रत्यभिनन्दिनीं तां वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं [4]शान्तमृगं निनाय ॥७९॥

अनुग्रहेति ॥ दयार्द्रचेता वाल्मीकिः । अनुग्रहं प्रत्यभिनन्दतीति तथोक्तां तां तामादाय सायं मृगैरध्यासितवेदिपार्श्वमधिष्ठितवेदिप्रान्तं शान्तमृगं स्वमाश्रमं निनाय ॥

[5]तामर्पयामास च शोकदीनां [6]तदागमप्रीतिषु तापसीषु ।
[7]निर्विष्टसारां पितृभिर्हिमांशोर[8]न्त्यां [9]कलां दर्श इवौषधीषु ॥८०॥

तामिति ॥ शोकदीनां तां सीतां तस्याः सीताया आगमेन प्रीतिर्यासां तासु तापसीषु । पितृभिरग्निष्वात्तादिभिर्निर्विष्टसारां भुक्तसारां हिमांशोरन्त्यामवशिष्टां कलां दर्शोऽमावास्याकाल ओषधीष्विव । अर्पयामास च । अत्र पराशरः–'पिबन्ति विमलं सोमं विशिष्टा तस्य या कला । सुधामृतमयीं पुण्यां तामिन्दोः पितरो मुने ॥' इति । व्यासश्च–'अमायां तु सदा सोम ओषधीः प्रतिपद्यते' इति ॥

ता इङ्गुदीस्नेहकृतप्रदीपमास्तीर्णमेध्याजिनतल्पमन्तः ।
तस्यै सपर्यानुपदं दिनान्ते निवासहेतोरुटजं [10]वितेरुः ॥ ८१ ॥

ता इति ॥ तास्तापस्यस्तस्यै सीतायै सपर्यानुपदं पूजानन्तरं दिनान्ते सायं-

---

१ बालेयमकृष्टपच्यम्; काले यदकृष्टरोहि. २ स्फीतिम्. ३ अनुग्रहम्. ४ शान्तमुखीम्. ५ समर्पयामास स:. ६ समागमप्रीतिषु. ७ निर्विष्टसारा. ८ अन्त्या. ९ कला. १० विमेजुः.

काले निवास एव हेतुस्तस्य निवासहेतोः । निवासार्थमित्यर्थः । 'षष्ठी हेतुप्रयोगे' इति षष्ठी । 'इङ्गुदी तापसतरुः' इत्यमरः । इङ्गुदीस्नेहेन कृतप्रदीपमन्तरास्तीर्णं मेध्यं शुद्धमजिनमेव तल्पं शय्या यस्मिंस्तमुटजं पर्णशालां वितेरुर्ददुः ॥

तत्राभिषेकप्रयता वसन्ती प्रयुक्तपूजा विधिनातिथिभ्यः[1] ।
वन्येन सा वल्कलिनी शरीरं पत्युः प्रजासंततये बभार ॥ ८२ ॥

तत्रेति ॥ तत्राश्रमेऽभिषेकेण स्नानेन प्रयता नियता वसन्ती विधिना शास्त्रेणातिथिभ्यः प्रयुक्तपूजा कृतसत्कारा वल्कलिनी सा सीता पत्युः प्रजासंततये संतानाविच्छेदाय हेतोः । वन्येन कन्दमूलादिना शरीरं बभार पुपोष ॥

अपि प्रभुः सानुशयोऽधुना स्यात्किमुत्सुकः[2] शक्रजितोऽपि हन्ता[3] ।
शशंस सीतापरिदेवनान्तमनुष्ठितं[4] शासनमग्रजाय ॥ ८३ ॥

अपीति ॥ प्रभू राजाधुनापि सानुशयः सानुतापः स्यात्किम् । इति काकुः । उत्सुकः शक्रजित इन्द्रजितो हन्ता लक्ष्मणोऽपि सीतापरिदेवनान्तं सीताविलापान्तमनुष्ठितं शासनमग्रजाय शशंस ॥

बभूव रामः सहसा[5] सबाष्पस्तुषारवर्षीव[6] सहस्यचन्द्रः ।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः ॥ ८४ ॥

बभूवेति ॥ सहसा सपदि सबाष्पो रामः । तुषारवर्षी सहस्यचन्द्र इव । बभूव । अत्यश्रुतया तुषारवर्षिणा पौषचन्द्रेण तुल्योऽभूत् । 'पौषे तैषसहस्यौ द्वौ' इत्यमरः । युक्तं चैतदित्याह—कौलीनाल्लोकापवादाद्भीतेन तेन रामेण वैदेहसुता सीता गृहान्निरस्ता । न मनस्तो मनसश्चित्तान्न निरस्ता । पञ्चम्यास्तसिल् ॥

निगृह्य शोकं स्वयमेव धीमान्वर्णाश्रमावेक्षणजागरूकः ।
स भ्रातृसाधारणभोगमृद्धं[7] राज्यं रजोरिक्तमनाः शशास ॥८५॥

निगृह्येति ॥ धीमान्वर्णानामाश्रमाणां चावेक्षणेऽनुसंधाने जागरूकोऽप्रमत्तः । 'जागरूकः' इत्यूकप्रत्ययः । रजोरिक्तमना रजोगुणशून्यचेताः स रामः स्वयमेव शोकं निगृह्य निरुध्य भ्रातृभिः साधारणभोगम् । शरीरस्थितिमात्रोपयुक्तमित्यर्थः । ऋद्धं राज्यं शशास ॥

तामेकभार्यां परिवादभीरोः साध्वीमपि त्यक्तवतो नृपस्य[8] ।
वक्षस्यसंघट्टसुखं वसन्ती रेजे[9] सपत्नीरहितेव लक्ष्मीः ॥ ८६ ॥

---

१ विविधातिथिभ्यः; विबुधातिथिभ्यः. २ इति. ३ निहन्ता. ४ परिदेवितान्तम्. ५ सपदि. ६ प्रबाष्पः. ७ योगम्. ८ तस्य. ९ रेमे.

**तामिति** ॥ परिवादभीरोर्निन्दाभीरोरतएवैकभार्यामपि साध्वीमपि तां सीतां त्यक्तवतो नृपस्य वक्षस्यसंघट्टसुखमसंभाव्यसुखं वसन्ती लक्ष्मीः सपत्नीरहितेव रेजे दिदीपे । तस्य स्त्र्यन्तरपरिग्रहो नाभूदिति भावः ॥

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्या
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार[1] ।
वृत्तान्तेन श्रवणविषयप्रापिणा[2] तेन भर्तुः
सा दुर्वारं[3] कथमपि परित्यागदुःखं विषेहे ॥ ८७ ॥

**सीतामिति** ॥ दशमुखरिपू रामः सीतां हित्वा त्यक्त्वान्यां स्त्रियं नोपयेमे न परिणीतवानिति यत् । 'उपाद्यमः स्वकरणे' इत्यात्मनेपदम् । किंच । तस्याः सीताया एव प्रतिकृतेः प्रतिमायाः हिरण्मय्याः सखा प्रतिकृतिसखः सन्क्रतूनाजहाराहृतवानिति यत्तेन श्रवणविषयप्रापिणा श्रोत्रदेशगामिना भर्तुर्वृत्तान्तेन वार्तया हेतुना सा सीता दुर्वारं दुर्निरोधं परित्यागेन यद्दुःखं तत्कथमपि विषेहे विसोढवती ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया
व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये
सीतापरित्यागो नाम चतुर्दशः सर्गः ।

---

## पञ्चदशः सर्गः ।

अरण्यकं गृहस्थानं श्वशुरौ यद्रजःकणाः ।
स्वयमौद्वाहिकं गेहं तस्मै रामाय ते नमः (?) ॥

कृतसीतापरित्यागः स रत्नाकरमेखलाम् ।
बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् ॥ १ ॥

**कृतेति** ॥ कृतसीतापरित्यागः स पृथिवीपालो रामो रत्नाकर एव मेखला यस्यास्ताम् । सार्णवामित्यर्थः । केवलाम् । एकामित्यर्थः । पृथिवीमेव बुभुजे भुक्तवान् । नतु पार्थिवीमित्यर्थः । सापि रत्नखचितमेखला । पृथिव्याः कान्तासमाधिर्व्यज्यते । रामस्य स्त्र्यन्तरपरिग्रहो नास्तीति श्लोकाभिप्रायः ॥

लवणेन विलुप्तेज्यास्तामिस्रेण तमभ्ययुः[4] ।
मुनयो यमुनाभाजः शरण्यं शरणार्थिनः ॥ २ ॥

**लवणेनेति** ॥ लवणेन लवणाख्येन तामिस्रेण तमिस्राचारिणा । रक्षसेत्यर्थः । वि-

---

१ आजुहाव. २ श्रवणविषयं प्रापिणा. ३ दुर्वारव्यथम्. ४ अन्वयुः.

लुप्तेज्या लुप्तयागक्रिया अतएव शरणार्थिनो रक्षणार्थिनो यमुनाभाजो यमुनातीरवासिनो मुनयः शरण्यं शरणार्हं रक्षणसमर्थं तं रामं रक्षितारमभ्ययुः प्राप्ताः । यातेर्लङ् ॥

अवेक्ष्य रामं ते तस्मिन्न प्रजह्रुः स्वतेजसा ।
त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम् ॥ ३ ॥

अवेक्ष्येति ॥ ते मुनयो राममवेक्ष्य । रक्षितारमिति शेषः । तस्मिँल्लवणे स्वतेजसा शापरूपेण न प्रजह्रुः । तथाहि । त्रायत इति त्राणं रक्षकम् । कर्तरि ल्युट् । तदभावे शाप एवास्त्रं येषां ते शापास्त्राः सन्तस्तपसो व्ययं कुर्वन्ति । शापदानात्तपसो व्यय इति प्रसिद्धेः ॥

प्रतिशुश्राव काकुत्स्थस्तेभ्यो विघ्नप्रतिक्रियाम् ।
धर्मसंरक्षणार्थैव[1] प्रवृत्तिर्[2]भुवि शार्ङ्गिणः ॥ ४ ॥

प्रतीति ॥ काकुत्स्थो रामस्तेभ्यो मुनिभ्यो विघ्नप्रतिक्रियां लवणवधरूपां प्रतिशुश्राव प्रतिजज्ञे । तथाहि । भुवि शार्ङ्गिणो विष्णोः प्रवृत्ती रामरूपेणावतरणं धर्मसंरक्षणमेवार्थः प्रयोजनं यस्याः सा तथैव ॥

ते रामाय वधोपायमाचख्युर्विबुधद्विषः ।
दुर्जयो लवणः शूली विशूलः प्रार्थ्यतामिति ॥ ५ ॥

त इति ॥ ते मुनयो रामाय विबुधद्विषः सुरारेर्लवणस्य वधोपायमाचख्युः । लुनातीति लवणः । नन्द्यादित्वाल्ल्युः । तत्रैव निपातनाण्णत्वम् । लवणः शूली शूलवान्दुर्जयोऽक्षयः । किंतु विशूलः शूलरहितः प्रार्थ्यतामभिगम्यताम् । 'याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः' इति केशवः ॥

आदिदेशाथ शत्रुघ्नं तेषां क्षेमाय राघवः ।
करिष्यन्निव नामास्य यथार्थमरिनिग्रहात् ॥ ६ ॥

आदिदेशेति ॥ अथ तेषां मुनीनां क्षेमाय क्षेमकरणाय राघवो रामः शत्रुघ्नमादिदेश । अत्रोत्प्रेक्ष्यते—अस्य शत्रुघ्नस्य नामारिनिग्रहाच्छत्रुहननाद्धेतोः । यथाभूतोऽर्थो यस्य तद्यथार्थं करिष्यन्निव । शत्रून्हन्तीति शत्रुघ्नः । 'अमनुष्यकर्तृके च' इति चकारात्कृतघ्नशत्रुघ्नादयः सिद्धा इति दुर्गसिंहः । पाणिनीयेऽपि बहुलग्रहणाद्यथेष्टसिद्धिः 'कृत्यल्युटो बहुलम्' इति ॥

---

१ धर्मसंरक्षणायैव; धर्मसंरक्षणार्थीय. २ प्रस्थानम्.

रामस्य स्वयमप्रयाणे हेतुमाह—

यः कश्चन रघूणां हि परमेकः परंतपः ।
अपवाद इवोत्सर्गं व्यावर्तयितुमीश्वरः ॥ ७ ॥

य इति ॥ हि यस्मात् । पराञ्छत्रूंस्तापयतीति परंतपः । 'द्विषत्परयोस्तापेः' इति खच्प्रत्ययः । 'खचि ह्रस्वः' इति ह्रस्वः । रघूणां मध्ये यः कश्चनैकः । अपवादो विशेषशास्त्रमुत्सर्गं सामान्यशास्त्रमिव । परं शत्रुं व्यावर्तयितुं बाधितुमीश्वरः समर्थः । अतः शत्रुघ्नमेवादिदेशेति पूर्वेणान्वयः ॥

अग्रजेन प्रयुक्ताशीस्ततो[१] दाशरथी रथी ।
ययौ वनस्थलीः पश्यन्पुष्पिताः सुरभीरभीः ॥ ८ ॥

अग्रजेनेति ॥ ततोऽग्रजेन रामेण प्रयुक्ताशीः कृताशीर्वादो रथी रथिकोऽभीर्निर्भीको दाशरथिः पुष्पाणि संजातानि यासां ताः पुष्पिताः सुरभीरामोदमाना वनस्थलीः पश्यन्ययौ ॥

रामादेशाद[२]नुगता सेना तस्यार्थसिद्धये ।
पश्चादध्ययनार्थस्य धातोरधिरिवाभवत् ॥ ९ ॥

रामेति ॥ रामादेशादनुगता सेना तस्य शत्रुघ्नस्य । अध्ययनमर्थोऽभिधेयो यस्य तस्य । धातोः 'इङध्ययने' इत्यस्य धातोः पश्चादधिरध्युपसर्ग इव । अर्थसिद्धये प्रयोजनसाधनायेत्येकत्र । अन्यत्राभिधेयसाधनाय । अभवत् । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । 'इङिकावध्युपसर्गं न व्यभिचरतः' इति न्यायेनाध्युपसर्गः स्वयमेवार्थसाधकस्य धातोः संनिधिमात्रेणोपकरोति सेनापि तस्य तद्वदिति भावः॥

आदिष्टवर्त्मा मुनिभिः स[३] गच्छंस्तपतां वरः[४] ।
विरराज रथप्रष्ठैर्वालखिल्यैरिवांशुमान् ॥ १० ॥

आदिष्टेति ॥ रथप्रष्ठै रथाग्रगामिभिः । 'प्रष्ठोऽग्रगामिनि' इति निपातः । मुनिभिः पूर्वोक्तैरादिष्टवर्त्मा निर्दिष्टमार्गो गच्छंस्तपतां देदीप्यमानानां मध्ये वरः श्रेष्ठः स शत्रुघ्नः । वालखिल्यैर्मुनिभिरंशुमान्सूर्य इव । विरराज । तेऽपि रथप्रष्ठा इत्यनुसंधेयम् ॥

तस्य मार्गवशादेका बभूव वसतिर्यतः ।
[५]रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने ॥ ११ ॥

तस्येति ॥ यतो गच्छतः । इणधातोः शतृप्रत्ययः । तस्य शत्रुघ्नस्य मार्गवशाद्रथस्वन उत्कण्ठा उद्ग्रीवा मृगा यस्मिंस्तस्मिन्वाल्मीकीये वाल्मीकिसंबन्धिनि । 'वृद्धाच्छः'

१ तदा. २ अनुपदं सेनाङ्गं तस्य सिद्धये. ३ गच्छन्वदताम्; स गच्छन्मतिमताम्. ४ वरैः. ५ रथस्वनोत्कीर्णमृगे; रथस्वनोत्कर्णमृगे.

इति छप्रत्ययः । तपोवन एका वसती रात्रिर्बभूव । तत्रैकां रात्रिमुषित इत्यर्थः । 'वसती रात्रिवेश्मनोः' इत्यमरः ॥

**तमृषिः पूजयामास कुमारं क्लान्तवाहनम्[1] ।**
**तपःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिः[2] ॥ १२ ॥**

**तमिति** ॥ क्लान्तवाहनं श्रान्तयुग्यं तं कुमारं शत्रुघ्नमृषिर्वाल्मीकिस्तपःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिरुत्कृष्टसंभावनाभिः पूजयामास ॥

**तस्यामेवास्य यामिन्यामन्तर्वत्नी प्रजावती ।**
**सुतावसूत संपन्नौ[3] कोशदण्डाविव क्षितिः ॥ १३ ॥**

**तस्यामिति** ॥ तस्यामेव यामिन्यां रात्रावस्य शत्रुघ्नस्य । अन्तरस्या अस्तीत्यन्तर्वत्नी गर्भिणी । 'अन्तर्वत्नी च गर्भिणी' इत्यमरः । 'अन्तर्वत्पतिवतोर्नुक्' इति ङीप् । नुगागमश्च । प्रजावती भ्रातृजाया सीता । क्षितिः संपन्नौ समग्रौ कोशदण्डाविव । सुतावसूत ॥

**संतानश्रवणाद्भ्रातुः सौमित्रिः सौमनस्यवान् ।**
**प्राञ्जलिर्मुनिमामन्त्र्य प्रातर्युक्तरथो ययौ ॥ १४ ॥**

**संतानेति** ॥ भ्रातुर्ज्येष्ठस्य संतानश्रवणाद्धेतोः सौमनस्यवान्प्रीतिमान्सौमित्रिः शत्रुघ्नः प्रातर्युक्तरथः सज्जरथः सन् । प्राञ्जलिः कृताञ्जलिर्मुनिमामन्त्र्यापृच्छ्य ययौ ॥

**स च प्राप मधूपघ्नं कुम्भीनस्याश्च कुक्षिजः ।**
**वनात्करमिवादाय सत्त्वराशिमुपस्थितः ॥ १५ ॥**

**स चेति** ॥ स शत्रुघ्नश्च मधूपघ्नं नाम लवणपुरं प्राप । कुम्भीनसी नाम रावणस्वसा । तस्याः कुक्षिजः पुत्रो लवणश्च वनात्करं बलिमिव सत्त्वानां प्राणिनां राशिमादायोपस्थितः प्राप्तः ॥

**धूमधूम्रो वसागन्धी ज्वालाबभ्रुशिरोरुहः ।**
**क्रव्याद्गणपरीवारश्चिताग्निरिव जंगमः ॥ १६ ॥**

**धूमेति** ॥ किंभूतो लवणः । धूम इव धूम्रः कृष्णलोहितवर्णः । 'धूम्रधूमलौ कृष्णलोहिते' इत्यमरः । वसागन्धो हृन्मेदोगन्धः । सोऽस्यास्तीति वसागन्धी । हृन्मेदस्तु वपा वसा' इत्यमरः । ज्वाला इव बभ्रवः पिशङ्गाः शिरोरुहाः केशा यस्य स तथोक्तः । 'विपुले नकुले विष्णौ बभ्रुः स्यात्पिङ्गले त्रिषु' इत्यमरः । क्रव्यं मांसमदन्तीति क्रव्यादो राक्षसाः ।

---

१ श्रान्त. २ विषय. ३ संपन्ना.

तेषां गण एव परीवारो यस्य स तथोक्तः । अतएव जंगमश्चरिष्णुश्चिताग्निरिव स्थितः । कृशानुपक्षे धूमैर्धूम्रवर्णः ज्वाला एव शिरोरुहाः । क्रव्यादो गृध्रादयः इत्यनुसंधेयम् ॥

अपशूलं तमासाद्य लवणं लक्ष्मणानुजः ।
रुरोध संमुखीनो[1] हि जयो रन्ध्रप्रहारिणाम् ॥ १७ ॥

अपशूलमिति ॥ लक्ष्मणानुजः शत्रुघ्नोऽपशूलं शूलरहितं तं लवणमासाद्य रुरोध । तथाहि । रन्ध्रप्रहारिणां रन्ध्रप्रहरणशीलानाम् । अपशूलतैवात्र रन्ध्रम् । जयः संमुखीनो हि । संमुखस्य दर्शनो हि । 'यथामुखसंमुखस्य दर्शनः खः' इति खप्रत्ययः । अधिकारलक्षणार्थस्तु दुर्लभ एव ॥

नातिपर्याप्तमालक्ष्य[2] मत्कुक्षेरद्य भोजनम्[3] ।
दिष्ट्या त्वमसि मे धात्रा भीतेनेवोपपादितः ॥ १८ ॥
इति संतर्ज्य शत्रुघ्नं राक्षसस्तज्जिघांसया ।
प्रांशुमुत्पाटयामास मुस्तास्तम्बमिव द्रुमम् ॥ १९ ॥

नेति । इतीति ॥ युग्मम् । राक्षसो लवणः । अद्य मत्कुक्षेः । भुज्यत इति भोजनम् । भोज्यं मृगादिकं नातिपर्याप्तमनतिसमग्रमालक्ष्य दृष्ट्वा भीतेनेव धात्रा दिष्ट्या भाग्येन मे त्वमुपपादितः कल्पितोऽसि । इति शत्रुघ्नं संतर्ज्य तस्य शत्रुघ्नस्य जिघांसया हन्तुमिच्छया प्रांशुमुन्नतं द्रुमम् । मुस्तास्तम्बमिव अक्लेशेनोत्पाटयामास ॥

सौमित्रेर्निशितैर्बाणैरन्तरा शकलीकृतः[4] ।
गात्रं पुष्परजः प्राप न शाखी नैर्ऋतेरितः ॥ २० ॥

सौमित्रेरिति ॥ नैर्ऋतेरितो रक्षःप्रेरितः शाख्यन्तरा मध्ये निशितैर्बाणैः शकलीकृतः सन्सौमित्रेः शत्रुघ्नस्य गात्रं न प्राप । किंतु पुष्परजः प्राप ॥

विनाशात्तस्य[5] वृक्षस्य रक्षस्तस्मै[6] महोपलम् ।
प्रजिघाय कृतान्तस्य मुष्टिं पृथगिव स्थितम् ॥ २१ ॥

विनाशादिति ॥ रक्षो लवणस्तस्य विनाशाद्धेतोः । महोपलं महान्तं पाषाणम् । पृथक्स्थितं कृतान्तस्य यमस्य मुष्टिमिव । मुष्टिशब्दो द्विलिङ्गः । तस्मै शत्रुघ्नाय प्रजिघाय प्रहितवान् ॥

ऐन्द्रमस्त्रमुपादाय शत्रुघ्नेन स ताडितः ।
सिकतात्वादपि[7] परां[8] प्रपेदे परमाणुताम् ॥ २२ ॥

---

१ सांमुगीनः. २ आलोक्य. ३ वेतनम्. ४ शकलीकृतम्. ५ विनाशं स्वस्य शूलस्य; निशानं स्वस्य शूलस्य. ६ तं च. ७ सिकतार्धात्; सिकताभ्यः. ८ हि पराम्; अपरमाम्.

ऐन्द्रमिति ॥ स महोपलः शत्रुघ्नेनैन्द्रमिन्द्रदेवताकमस्त्रमुपादाय ताडितोऽभिहतः सन् । सिकतात्वात्सिकताभावादपि परां परमाणुतां प्रपेदे । यतोऽणुर्नास्ति स परमाणुरित्याहुः ॥

[1]तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः ।
एकताल इवोत्पातपवनप्रेरितो गिरिः ॥ २३ ॥

तमिति ॥ निशाचरो राक्षसो दक्षिणं दोः । 'ककुद्दोषणी' इति भगवतो भाष्यकारस्य प्रयोगाद्दोषशब्दस्य नपुंसकत्वं द्रष्टव्यम् । 'भुजबाहू प्रवेष्टो दोः' इति पुंलिङ्गसाहचर्यात्पुंस्त्वं च । तथा च प्रयोगः—'दोषं तस्य तथाविधस्य भजतः' इति । सव्येतरं बाहुमुद्यम्य । एकस्तालस्तदाख्यवृक्षो यस्मिन्स एकतालः । उत्पातपवनेन प्रेरितो गिरिरिव । तं शत्रुघ्नमुपाद्रवदभिद्रुतः ॥

कार्ष्णेन पत्रिणा [2]शत्रुः स भिन्नहृदयः पतन् ।
आनिनाय भुवः कम्पं जहाराश्रमवासिनाम् ॥ २४ ॥

कार्ष्णेनेति ॥ स शत्रुर्लवणः । कार्ष्णेन वैष्णवेन पत्रिणा बाणेन । उक्तं च रामायणे—'एवमेष प्रजनितो विष्णोस्तेजोमयः शरः' इति । 'विष्णुर्नारायणः कृष्णः' इत्यमरः । भिन्नहृदयः पतन्भुवः कम्पमानिनायानीतवान् । देहभारादित्यर्थः । आश्रमवासिनां कम्पं जहार । तन्नाशादकुतोभया बभूवुरित्यर्थः ॥

वयसां पङ्क्तयः पेतुर्हतस्योपरि विद्विषः[3] ।
तत्प्रतिद्वन्द्विनो मूर्ध्नि दिव्याः कुसुमवृष्टयः ॥ २५ ॥

वयसामिति ॥ हतस्य । विद्वेष्टीति विद्विट् तस्य विद्विषो राक्षसस्योपरि वयसां पक्षिणां पङ्क्तयः पेतुः । तत्प्रतिद्वन्द्विनः शत्रुघ्नस्य मूर्ध्नि तु दिव्याः कुसुमवृष्टयः पेतुः ॥

स हत्वा लवणं वीरस्[4]तदा मेने म[5]हौजसः ।
भ्रातुः सोदर्यमात्मानमिन्द्रजिद्वधशोभिनः ॥ २६ ॥

स इति ॥ स वीरः शत्रुघ्नो लवणं हत्वा तदात्मानं महौजसो महाबलस्येन्द्रजिद्वधेन शोभिनो भ्रातुर्लक्ष्मणस्य समानोदरे शयितं सोदर्यमेकोदरं मेने । 'सोदराद्यः' इति यप्रत्ययः ॥

तस्य संस्तूयमानस्य चरितार्थैस्तपस्विभिः ।
शुशुभे विक्रमोदग्रं व्रीडयावनतं शिरः ॥ २७ ॥

---

१ तमुपाद्रवदुद्यम्य राक्षसो दक्षिणं करम्; तमुपाद्रवदुद्यम्य दोषं रक्षोऽथ दक्षिणम्; दक्षिणं दोषमुद्यम्य राक्षसस्तमुपाद्रवत्. २ शत्रोः. ३ रक्षसः. ४ वीरम्. ५ महामनाः.

तस्येति ॥ चरितार्थैः कृतार्थैः कृतकार्यैस्तपस्विभिः संस्तूयमानस्य तस्य शत्रुघ्नस्य विक्रमेणोदग्रमुन्नतं व्रीडया लज्जयावनतं नम्रं शिरः शुशुभे । विक्रान्तस्य लज्जैव भूषणमिति भावः ॥

उपकूलं स कालिन्द्याः पुरीं[1] पौरुषभूषणः ।
निर्ममे निर्ममोऽर्थेषु मथुरां मधुराकृतिः ॥ २८ ॥

उपेति ॥ पौरुषभूषणः । अर्थेषु विषयेषु निर्ममो निस्पृहः । मधुराकृतिः सौम्यरूपः । स शत्रुघ्नः कालिन्द्या यमुनाया उपकूलं कूले । विभक्त्यर्थेऽव्ययीभावः । मथुरां नाम पुरीं निर्मितवान् ॥

या[2] सौराज्यप्रकाशाभिर्बभौ पौर[3]विभूतिभिः ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोप[4]निवेशिता ॥ २९ ॥

येति ॥ या पूः । शत्रुघ्नः शोभनो राजा यस्याः पुरः सा सुराज्ञी । सुराज्ञ्या भावः सौराज्यम् । तेन प्रकाशाभिः प्रकाशमानाभिः पौराणां विभूतिभिरैश्वर्यैः । स्वर्गस्याभिष्यन्दोऽतिरिक्तजनः । तस्य वमनमाहरणं कृत्वोपनिवेशितोपस्थापितेव बभौ । अत्र कौटिल्यः— 'भूतपूर्वमभूतपूर्वं वा जनपदं परदेशप्रवाहेण स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्' इति ॥

तत्र सौधगतः पश्यन्यमुनां चक्रवाकिनीम् ।
हेम[5]भक्तिमतीं भूमेः प्रवेणीमिव[6] पिप्रिये ॥ ३० ॥

तत्रेति ॥ तत्र मथुरायां सौधगतो हर्म्यारूढः स चक्रवाकिनीं चक्रवाकवतीं यमुनाम् । हेमभक्तिमतीं सुवर्णरचनावतीं भूमेः प्रवेणीं वेणीमिव । 'वेणिः प्रवेणी' इत्यमरः । पश्यन्पिप्रिये प्रीतः । 'प्रीङ् प्रीणने' इति धातोर्दैवादिकाल्लिट् ॥

संप्रति रामसंतानवृत्तान्तमाह—

सखा दशरथस्यापि[7] जनकस्य च मन्त्रकृत्[8] ।
संचस्कारोभयप्रीत्या मैथिलेयौ यथाविधि ॥ ३१ ॥

सखेति ॥ दशरथस्य जनकस्य च सखा मन्त्रकृन्मन्त्रद्रष्टा स वाल्मीकिरपि 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति क्विप् । उभयोर्दशरथजनकयोः प्रीत्या स्नेहेन मैथिलेयौ मैथिलीपुत्रौ यथाविधि यथाशास्त्रं संचस्कार संस्कृतवान् । जातकर्मादिभिरिति शेषः ॥

स तौ[9] कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया ।
कविः कुशलवावेव चकार किल नामतः ॥ ३२ ॥

१ परम्. २ सा. ३ पौरसमृद्धिभिः. ४ विनिवेशिता. ५ हेमभक्तिमयीम्; हेमपङ्क्तिमयीम्. ६ स वेणीम्. ७ अथ. ८ मन्त्रवित्. ९ सुतौ.

**स इति** ॥ स कविर्वाल्मीकिः कुशैर्दर्भैर्लवैर्गोपुच्छलोमभिः । 'लवो लवणकिञ्जल्कपक्ष्मगोपुच्छलोमसु' इति वैजयन्ती । उन्मृष्टो गर्भक्लेदो गर्भोपद्रवो ययोस्तौ कुशलवोन्मृष्टगर्भक्लेदौ तौ मैथिलेयौ तेषां कुशानां च लवानां चाख्यया नामतो नाम्ना यथासंख्यं कुशलवावेव चकार किल । कुशोन्मृष्टः कुशः । लवोन्मृष्टो लवः ॥

साङ्गं च वेदमध्याप्य किंचिदुत्क्रान्तशैशवौ ।
स्वकृतिं गापयामास कविप्रथमपद्धतिम्[1] ॥ ३३ ॥

**साङ्गमिति** ॥ किंचिदुत्क्रान्तशैशवावतिक्रान्तबाल्यौ तौ साङ्गं च वेदमध्याप्य कवीनां प्रथमपद्धतिम् । कविताबीजमित्यर्थः । स्वकृतिं काव्यं रामायणाख्यं गापयामास । गापयतेर्लिट् । शब्दकर्मत्वात् 'गतिबुद्धि–' इत्यादिना द्विकर्मकत्वम् ॥

रामस्य मधुरं वृत्तं गायन्तौ मातुरग्रतः ।
तद्वियोगव्यथां किंचिच्छिथिलीचक्रतुः सुतौ ॥ ३४ ॥

**रामस्येति** ॥ तौ सुतौ रामस्य वृत्तं मातुरग्रतो मधुरं गायन्तौ तद्वियोगव्यथां रामविरहवेदनां किंचिच्छिथिलीचक्रतुः ॥

इतरेऽपि रघोर्वंश्यास्त्रयस्त्रेताग्नितेजसः ।
तद्योगात्पतिवत्नीषु पत्नीष्वासन्द्विसूनवः ॥ ३५ ॥

**इतरेऽपीति** ॥ रघोर्वंश्या वंशे भवाः । त्रेतेत्यग्नयस्त्रेताग्नयः । तेषां तेज इव तेजो येषां ते त्रेताग्नितेजसः । इतरे रामादन्ये त्रयो भरतादयोऽपि तद्योगात्तेषां योगाद्भरतादिसंबन्धात्पतिवत्नीषु भर्तृमतीषु जीवत्पतिकासु । ख्यातिमतीष्वित्यर्थः । 'पतिवत्नी सभर्तृका' इत्यमरः । 'अन्तर्वत्पतिवतोर्नुक्' इति ङीप्प्रत्ययो नुगागमश्च । पत्नीषु द्विसूनव आसन् । द्वौ द्वौ सूनू येषां ते द्विसूनव इति विग्रहः । क्वचित्संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत् ॥

शत्रुघातिनि शत्रुघ्नः सुबाहौ च बहुश्रुते ।
मथुराविदिशे सून्वोर्निदधे[2] पूर्वजोत्सुकः ॥ ३६ ॥

**शत्रुघातिनीति** ॥ पूर्वजोत्सुको ज्येष्ठप्रियः शत्रुघ्नो बहुश्रुते शत्रुघातिनि सुबाहौ च तन्नामकयोः सून्वोर्मथुरा च विदिशा च ते नगर्यौ निदधे । निधाय गत इत्यर्थः ॥

भूयस्तपोव्ययो मा भूद्वाल्मीकेरिति सोऽत्यगात् ।
मैथिलीतनयाद्गीतनिःस्पन्दमृगमाश्रमम् ॥ ३७ ॥

---

१ कविः प्रथमपद्धतिम्. २ निदधत्.

भूय इति ॥ स शत्रुघ्नो मैथिलीतनययोः कुशलवयोरुद्गीतेन निःस्पन्दमृगं गीतप्रियतया निश्चलहरिणं वाल्मीकेराश्रमम् । भूयः पुनरपि तपोव्ययः संविधानकरणार्थं तपोहानिर्मा भूदिति हेतोः । अत्यगात् । अतिक्रम्य गत इत्यर्थः ॥

वशी विवेश चायोध्यां रथ्यासंस्कारशोभिनीम् ।
लवणस्य वधात्पौरैरीक्षितोऽत्यन्तगौरवम् ॥ ३८ ॥

वशीति ॥ वशी स लवणस्य वधाद्धेतोः पौरैः पौरजनैरत्यन्तं गौरवं यस्मिन्कर्मणि तत्तथेक्षितः सन् । रथ्यासंस्कारैस्तोरणादिभिः शोभते या तामयोध्यां विवेश च ॥

स ददर्श सभामध्ये सभासद्भिरुपस्थितम् ।
रामं सीतापरित्यागादसामान्यपतिं भुवः ॥ ३९ ॥

स इति ॥ स शत्रुघ्नः सभामध्ये सभासद्भिः सभ्यैरुपस्थितं सेवितं सीतापरित्यागाद्भुवोऽसामान्यपतिमसाधारणपतिं रामं ददर्श ॥

तमभ्यनन्दत्प्रणतं लवणान्तकमग्रजः ।
कालनेमिवधात्प्रीतस्तुराषाडिव शार्ङ्गिणम् ॥ ४० ॥

तमिति ॥ अग्रजो रामो लवणस्यान्तकं हन्तारं प्रणतं तं शत्रुघ्नम् । कालनेमिर्नाम राक्षसः । तस्य वधात्प्रीतः । तुरां वेगं सहत इति तुराषाडिन्द्रः । 'छन्दसि सहः' इति ण्विः । यद्वा सहतेर्णिचि कृते साहयतेः क्विप् । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः । 'सहेः साडः सः' इति षत्वम् । शार्ङ्गिणमुपेन्द्रमिव । अभ्यनन्दत् ॥

स पृष्टः सर्वतो वार्तमाख्यद्राज्ञे न संततिम् ।
प्रत्यर्पयिष्यतः काले कवेराद्यस्य शासनात् ॥ ४१ ॥

स इति ॥ स शत्रुघ्नः पृष्टः सन् । सर्वतो वार्तं कुशलं राज्ञे रामायाख्यदाख्यातवान् । चक्षिङो लुङ् । 'चक्षिङः ख्याञ्' इति ख्याञादेशः । 'अस्यतिवक्ति–' इत्यङ् । 'आतो लोप इटि च' इत्याकारलोपः । ख्यातेर्वा लुङ् । संततिं कुशलवोत्पत्तिं नाख्यत् । कुतः कालेऽवसरे प्रत्यर्पयिष्यत आद्यस्य कवेर्वाल्मीकेः शासनात् ॥

अथ जानपदो विप्रः शिशुमप्राप्तयौवनम् ।
अवतार्याङ्कशय्यास्थं द्वारि चक्रन्द भूपतेः ॥ ४२ ॥

अथेति ॥ अथ जनपदे भवो जानपदो विप्रः कश्चिदिति शेषः । अप्राप्तयौवनं

१ ततः, कृती; बली. २ अतिगौरवमीक्षितः अधिगौरवमीक्षितः. ३ वार्ताम्. ४ आख्यात्. ५ प्रख्यापयिष्यतः. ६ पुत्रम्. ७ शय्यायाः.

शिशुम् । मृतमिति शेषः । भूपते रामस्य द्वार्यङ्कशय्यास्थं यथा तथावतार्याङ्कस्थत्वेनै-वावरोप्य चक्रन्द चुक्रोश ॥

शोचनीयासि वसुधे या त्वं दशरथाच्युता[1] ।
रामहस्तमनुप्राप्य[2] कष्टात्कष्टतरं गता[3] ॥ ४३ ॥

शोचनीयेति ॥ हे वसुधे, दशरथाच्च्युता या त्वं रामहस्तमनुप्राप्य कष्टात्कष्टतरं गता सती शोचनीयासि ॥

श्रुत्वा तस्य शुचो[4] हेतुं गोप्ता जिह्राय राघवः ।
न ह्यकालभवो मृत्युरिक्ष्वाकुपदमस्पृशत् ॥ ४४ ॥

श्रुत्वेति ॥ गोप्ता रक्षको राघवस्तस्य विप्रस्य शुचः शोकस्य हेतुं पुत्रमरणरूपं श्रुत्वा जिह्राय लज्जितः । कुतः । हि यस्मादकालभवो मृत्युरिक्ष्वाकूणां पदं राष्ट्रं ना-स्पृशत् । वृद्धे जीवति यवीयान्न म्रियत इत्यर्थः ॥

स मुहूर्तं क्षमस्वेति[5] द्विजमाश्वास्य दुःखितम् ।
यानं सस्मार कौबेरं वैवस्वतजिगीषया[6] ॥ ४५ ॥

स इति ॥ स रामो दुःखितं द्विजं मुहूर्तं क्षमस्वेत्याश्वास्य वैवस्वतस्यान्तकस्यापि जिगीषया जेतुमिच्छया कौबेरं यानं पुष्पकं सस्मार ॥

आत्तशस्त्रस्तदध्यास्य प्रस्थितः स[7] रघूद्वहः ।
उच्चचार पुरस्तस्य[8] गूढरूपा सरस्वती ॥ ४६ ॥

आत्तेति ॥ स रघूद्वहो राम आत्तशस्त्रः सन् । तत्पुष्पकमध्यास्य प्रस्थितः । अथ तस्य पुरो गूढरूपा सरस्वत्यशरीरा वागुच्चचारोद्बभूव ॥

राजन्प्रजासु ते कश्चिदपचारः प्रवर्तते ।
तमन्विष्य[9] प्रशमयेर्भवितासि ततः कृती ॥ ४७ ॥

राजन्निति ॥ हे राजन्, ते प्रजासु कश्चिदपचारो वर्णधर्मव्यतिरेकः प्रवर्तते । तमपचारमन्विष्य प्रशमयेः । ततः कृती कृतकृत्यो भवितासि भविष्यसि ॥

इत्याप्तवचनाद्रामो विनेष्यन्[10]वर्णविक्रियाम् ।
दिशः पपात पत्रेण वेगनिष्कम्पकेतुना ॥ ४८ ॥

इतीति ॥ इत्याप्तवचनाद्रामो वर्णविक्रियां वर्णापचारं विनेष्यन्नपनेष्यन्वेगेन

---

१ अनु. २ अनुप्राप्ता. ३ कृता. ४ वचः. ५ सहस्व. ६ जिघांसया. ७ च. ८ चास्य. ९ अन्विष्यन्. १० विमृश्यन्.

निष्कम्पकेतुना पत्रेण वाहनेन पुष्पकेन । 'पत्रं वाहनपक्षयोः' इत्यमरः । दिशः पपात धावति स्म ॥

अथ धूमाभिताम्राक्षं वृक्षशाखावलम्बिनम्[1] ।
ददर्श कंचिदैक्ष्वाकस्[2]तपस्यन्तमधोमुखम् ॥ ४९ ॥

अथेति ॥ अथैक्ष्वाकुवंशप्रभव ऐक्ष्वाको रामः । 'कोपधादण्' इत्यणि कृते 'दाण्डिनायन-' इत्यादिनोकारलोपनिपातः । धूमेन पीयमानेनाभिताम्राक्षं वृक्षशाखावलम्बिनमधोमुखं तपस्यन्तं तपश्चरन्तं कंचित्पुरुषं ददर्श ॥

पृष्टनामान्वयो राज्ञा स किलाचष्ट धूमपः ।
आत्मानं शंबुकं नाम शूद्रं सुरपदार्थिनम् ॥ ५० ॥

पृष्टेति ॥ राज्ञा नाम चान्वयश्च तौ पृष्टौ नामान्वयौ यस्य स तथोक्तः । धूमं पिबतीति धूमपः । 'सुपि' इति योगविभागात्कप्रत्ययः । स पुरुष आत्मानं सुरपदार्थिनं स्वर्गार्थिनम् । अनेन प्रयोजनमपि पृष्ट इति ज्ञेयम् । शंबुकं नाम शूद्रमाचष्ट बभाषे किल ॥

तपस्यनधिकारित्वात्प्रजानां तमघावहम् ।
शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे ॥ ५१ ॥

तपसीति ॥ तपस्यनधिकारित्वात्प्रजानामघावहं दुःखावहं तं शूद्रं शीर्षच्छेद्यम् । 'शीर्षच्छेदाद्यच्च' इति यत्प्रत्ययः । परिच्छिद्य निश्चित्य नियन्ता रक्षको रामः शस्त्रमाददे जग्राह ॥

स तद्वक्त्रं हिमक्लिष्टकिञ्जल्कमिव पङ्कजम् ।
ज्योतिष्कणाहतश्मश्रु कण्ठनालादपातयत् ॥ ५२ ॥

स इति ॥ स रामो ज्योतिष्कणैः स्फुलिङ्गैराहतानि दग्धानि श्मश्रूणि यस्य तत्तस्य वक्त्रम् । हिमक्लिष्टकिञ्जल्कं पङ्कजमिव । कण्ठ एव नालं तस्मादपातयत् ॥

कृतदण्डः स्वयं राज्ञा लेभे शूद्रः सतां गतिम् ।
तपसा दुश्चरेणापि न स्वमार्गविलङ्घिना ॥ ५३ ॥

कृतेति ॥ शूद्रः शंबुको राज्ञा स्वयं कृतदण्डः कृतशिक्षः सन् । सतां गतिं लेभे । दुश्चरेणापि स्वमार्गविलङ्घिना । अनधिकारदुष्टेनेत्यर्थः । तपसा न लेभे । अत्र मनुः—'राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥' इति ॥

---

१ विलम्बिनम्. २ इक्ष्वाकुः.

रघुनाथोऽप्यगस्त्येन मार्गसंदर्शितात्मना[1] ।
महौजसा संयुयुजे शरत्काल इवेन्दुना ॥ ५४ ॥

रघुनाथ इति ॥ रघुनाथोऽपि मार्गसंदर्शितात्मना महौजसागस्त्येन । इन्दुना शरत्काल इव । संयुयुजे संगतः । इन्दावपि विशेषणं योज्यम् । रघुनाथेत्यत्र क्षुभ्नादित्वाण्णत्वाभावः ॥

कुम्भयोनिरलंकारं तस्मै दिव्यपरिग्रहम् ।
ददौ दत्तं समुद्रेण पीतेनेवात्मनिष्क्रयम् ॥ ५५ ॥

कुम्भेति ॥ कुम्भयोनिरगस्त्यः पीतेन समुद्रेणात्मनिष्क्रयमिवात्ममोचनमूल्यमिव दत्तम् । अतएव परिगृह्यत इति व्युत्पत्त्या दिव्यपरिग्रहः । दिव्यानां परिग्राह्य इत्यर्थः । तमलंकारं तस्मै रामाय ददौ ॥

तं दधन्मैथिलीकण्ठनिर्व्यापारेण बाहुना ।
पश्चान्निववृते रामः प्राक्परासुर्द्विजात्मजः ॥ ५६ ॥

तमिति ॥ मैथिलीकण्ठनिर्व्यापारेण बाहुना तमलंकारं दधद्रामः पश्चान्निववृते निवृत्तः । परासुर्मृतो द्विजात्मजः प्राग्रामात्पूर्वं निववृते ॥

तस्य पूर्वोदितां निन्दां द्विजः पुत्रसमागतः[2] ।
स्तुत्या निवर्तयामास त्रातुर्वैवस्वतादपि ॥ ५७ ॥

तस्येति ॥ पुत्रसमागतः पुत्रेण संगतो द्विजो वैवस्वतादन्तकादपि त्रातू रक्षकस्य । 'भीत्रार्थानां भयहेतुः' इत्यपादानात्पञ्चमी । तस्य रामस्य पूर्वोदितां पूर्वोक्तां निन्दां स्तुत्या निवर्तयामास ॥

तमध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः ।
मेघाः सस्यमिवाम्भोभिरभ्यवर्षन्नुपायनैः ॥ ५८ ॥

तमिति ॥ अध्वरायाश्वमेधाय मुक्ताश्वं तं रामं रक्षःकपिनरेश्वराः सुग्रीवविभीषणादयो राजानश्च । मेघा अम्भोभिः सस्यमिव । उपायनैरभ्यवर्षन् ॥

दिग्भ्यो निमन्त्रिताश्चैनमभिजग्मुर्महर्षयः ।
न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि ॥ ५९ ॥

दिग्भ्य इति ॥ निमन्त्रिता आहूता महर्षयश्च भूम्याः संबन्धीनि भौमानि धि-

---

१ मार्गे संदर्शितात्मना. २ समन्वितः.

ष्ण्यानि स्थानान्येव न । 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः । किंतु ज्योतिर्मयानि नक्षत्ररूपाणि धिष्ण्यान्यपि हित्वा दिग्भ्य एनं राममभिजग्मुः ॥

उपशल्यनिविष्टैस्तैश्चतुर्द्वारमुखी बभौ ।
अयोध्या सृष्टलोकेव सद्यः पैतामही तनुः ॥ ६० ॥

उपेति ॥ चत्वारि द्वाराण्येव मुखानि यस्याः सा चतुर्द्वारमुख्ययोध्या । उपशल्येषु ग्रामान्तेषु निविष्टैः । 'ग्रामान्त उपशल्यं स्यात्' इत्यमरः । तैर्महर्षिभिः । सद्यः सृष्टलोका पितामहस्येयं पैतामही तनुर्मूर्तिरिव । बभौ ॥

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।
अनन्यजानेः सैवासीद्यस्माज्जाया हिरण्मयी ॥ ६१ ॥

श्लाघ्य इति ॥ वैदेह्यास्त्यागोऽपि श्लाघ्यो वर्ण्य एव । कुतः । यस्मात् । प्राग्वंशः प्राचीनस्थूणो यज्ञशालाविशेषः । तद्वासिनः । नास्त्यन्या जाया यस्य तस्यानन्यजानेः । 'जायाया निङ्' इति समासान्तो निङादेशः । पत्यू रामस्य हिरण्मयी सौवर्णी । 'दाण्डिनायन—' आदिसूत्रेण निपातः । सा निजैव जाया पत्न्यासीत् । कविवाक्यमेतत् ॥

विधेरधिकसंभारस्ततः प्रववृते मखः ।
आसन्यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः ॥ ६२ ॥

विधेरिति ॥ ततो विधेः शास्त्रादधिकसंभारोऽतिरिच्यमानपरिकरो मखः प्रववृते प्रवृत्तः । यत्र मखे । विहन्यन्त एभिरिति विघ्नाः प्रत्यूहाः । 'मखे यज्ञे यज्ञार्थे कविधानम्' इति कः । क्रियाविघ्ना अनुष्ठानविघातका राक्षसा एव रक्षिणो रक्षका आसन् ॥

अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ[2] ॥ ६३ ॥

अथेति ॥ अथ मैथिलेयौ मैथिलीतनयौ । 'स्त्रीभ्यो ढक्' । कुशलवौ गुरुणा वाल्मीकिना चोदितौ प्रेरितौ सन्तौ । प्राचेतसो वाल्मीकिः । उपज्ञायत इत्युपज्ञा । 'आतश्चोपसर्गे' इति कर्मण्यङ्प्रत्ययः । प्राचेतसस्योपज्ञा प्राचेतसोपज्ञम् । प्राचेतसेऽनादौ ज्ञातमित्यर्थः । 'उपज्ञा ज्ञानमाद्यं स्यात्' इत्यमरः । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति नपुंसकत्वम् । अय्यते ज्ञायतेऽनेनेत्ययनम् । रामस्यायनं चरितं रामायणं रामायणाख्यं काव्यम् । 'पूर्वपदात्संज्ञायामगः' इति णत्वम् । उत्तरायणमितिवत् । इतस्ततो जगतुः । गायतेर्लिट् ॥

---

१ आसीद्यत्सैव; यस्यासीत्सैव; तस्यासीत्सैव. २ नोदितौ.

वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किंनरस्वनौ।
किं तद्येन मनो हर्तुमलं स्यातां न शृण्वताम्॥ ६४॥

**वृत्तमिति**॥ रामस्य वृत्तं वर्ण्यम्। वस्त्विति शेषः। वाल्मीकेः कृतिः काव्यम्। गेयमिति शेषः। तौ कुशलवौ किंनरस्वनौ किंनरकण्ठौ गायकौ। पुनरिति शेषः। अतएव तत्किं येन निमित्तेन तौ शृण्वतां मनो हर्तुमलं शक्तौ न स्याताम्। सर्वं सरसमित्यर्थः॥

रूपे गीते च माधुर्यं तयोस्तज्ज्ञैर्निवेदितम्।
ददर्श सानुजो रामः शुश्राव च कुतूहली॥ ६५॥

**रूप इति**॥ ते जानन्तीति तज्ज्ञाः। तैस्तज्ज्ञैरभिज्ञैर्निवेदितं तयोः कुशलवयो रूपे आकारे गीते च माधुर्यं रामणीयकं सानुजो रामः कुतूहली सानन्दः सन्यथासंख्यं ददर्श शुश्राव च॥

तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ।
हिमनिष्यन्दिनी प्रातर्निर्वातेव वनस्थली॥ ६६॥

**तदिति**॥ तयोर्गीतश्रवण एकाग्रासक्ताश्रुमुखी। आनन्दादिति भावः। संसत्सभा प्रातर्हिमनिष्यन्दिनी निर्वाता वातरहिता वनस्थलीव। बभौ शुशुभे। आनन्दपारवश्यान्निष्पन्दमास्त इत्यर्थः॥

वयोवेषविसंवादि रामस्य च तयोस्[1]तदा।
जनता प्रेक्ष्य सादृश्यं[2] नाक्षिकम्पं व्यतिष्ठत॥ ६७॥

**वय इति**॥ जनता जनानां समूहः। 'ग्रामजनबन्धुसहायेभ्यस्तल्' इति तल्प्रत्ययः। वयोवेषाभ्यामेव विसंवादि विलक्षणं तदा तयोः कुशलवयो रामस्य च सादृश्यं प्रेक्ष्य। नास्त्यक्षिकम्पो यस्मिन्कर्मणि तद्यथा तथा। नञर्थस्य नशब्दस्य बहुव्रीहिः। व्यतिष्ठतातिष्ठत्। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। विस्मयादनिमिषमद्राक्षीदित्यर्थः॥

उभयोर्न तथा लोकः प्रावीण्येन विसिष्मिये।
नृपतेः प्रीतिदा[3]नेषु वीतस्पृहतया यथा॥ ६८॥

**उभयोरिति**॥ लोको जन उभयोः कुमारयोः प्रावीण्येन नैपुण्येन तथा न विसिष्मिये न विस्मितवान्यथा नृपतेः प्रीतिदानेषु वीतस्पृहतया नैःस्पृह्येण विसिष्मिये॥

---

१ च सा. २ वीक्षापन्ना; वीक्ष्यापन्ना; व्रीडापन्ना; विस्मयेन. ३ प्रीतिदानेन.

गेये को नु विनेता वां कस्य चेयं कृतिः कवेः[1] ।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ॥ ६९ ॥

गेय इति ॥ गेये गीते को नु वां युवयोर्विनेता शिक्षकः । नुशब्दः प्रश्ने । 'नुपृच्छायां वितर्के च' इत्यमरः । इयं च कस्य कवेः कृतिरिति राज्ञा स्वयं पृष्टौ तौ कुशलवौ वाल्मीकिमशंसतामुक्तवन्तौ । विनेतारं कविं चेत्यर्थः । 'गेये केन विनीतौ वाम्' इति पाठे वामिति युष्मदर्थप्रतिपादकमव्ययं द्रष्टव्यम् । तथा चायमर्थः—केन पुंसा वां युवां गेये गीतविषये विनीतौ शिक्षितौ । कर्मणि निष्ठाप्रत्ययः ॥

अथ सावरजो रामः प्राचेतसमुपेयिवान् ।
ऊरीकृत्यात्मनो[2] देहं राज्यमस्मै न्यवेदयत् ॥ ७० ॥

अथेति ॥ अथ सावरजो रामः प्राचेतसं वाल्मीकिमुपेयिवान्प्राप्तः सन् । देहमात्मन ऊरीकृत्य । आत्मानं स्थापयित्वेत्यर्थः । राज्यमस्मै प्राचेतसाय न्यवेदयत्समर्पितवान् ॥

स तावाख्याय रामाय[3] मैथिलेयौ तदात्मजौ[4] ।
कविः कारुणिको वव्रे सीतायाः संपरिग्रहम्[5] ॥ ७१ ॥

स इति ॥ करुणा प्रयोजनमस्य कारुणिको दयालुः। 'प्रयोजनम्' इति ठञ्। 'स्याद्दयालुः कारुणिकः' इत्यमरः। स कवी रामाय तौ मैथिलेयौ तदात्मजौ रामसुतावाख्याय सीतायाः संपरिग्रहं स्वीकारं वव्रे ययाचे ॥

तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि ।
दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः ॥ ७२ ॥

तातेति ॥ हे तात, ते स्नुषा सीता नोऽस्माकमक्ष्णोः समीपं समक्षम् । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तष्टच् । जातवेदसि वह्नौ शुद्धा । नास्माकमविश्वास इत्यर्थः । किंतु रक्षसो रावणस्य दौरात्म्यादत्रत्याः प्रजास्तां न श्रद्दधुर्न विशश्वसुः ॥

ताः स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली ।
ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया ॥ ७३ ॥

---

१ कवेः कृतिः. २ दूरीकृत्य. ३ रामस्य. ४ तदात्मजौ. ५ तं परिग्रहम्.

७१–७२ श्लोकयोर्मध्ये क्षेपकोऽयं दृश्यते—

तदाकर्ण्य वचस्तस्य रामो राजीवलोचनः ।
सह हर्षविषादाभ्यां युक्तस्तं प्रोक्तवान्मुनिम् ॥

**ता इति** ॥ मैथिली स्वचारित्रमुद्दिश्य ताः प्रजाः प्रत्याययतु विश्वासयतु । विश्वासस्य बुद्धिरूपत्वात् 'णौ गमिरबोधने' इति इणो गम्यादेशो नास्ति। ततोऽनन्तरं पुत्रवतीमेनां सीतां त्वदाज्ञया प्रतिपत्स्ये स्वीकरिष्ये ॥

इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः ।
शिष्यैरानाययामास[1] स्वसिद्धिं नियमैरिव ॥ ७४ ॥

**इतीति** ॥ राज्ञेति प्रतिश्रुते प्रतिज्ञाते सति मुनिराश्रमाज्जानकीं शिष्यैः प्रयोज्यैः। स्वसिद्धिं स्वार्थसिद्धिं नियमैस्तपोभिरिव । आनाययामास ॥

अन्येद्युरथ काकुत्स्थः संनिपात्य[2] पुरौकसः ।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ॥ ७५ ॥

**अन्येद्युरिति** ॥ अथ काकुत्स्थो रामः । अन्येद्युरन्यस्मिन्नहनि प्रस्तुतप्रतिपत्तये प्रकृतकार्यानुसंधानाय पुरौकसः पौरान्संनिपात्य मेलयित्वा कविं वाल्मीकिमाह्वाययामासाकारयामास ॥

स्वरसंस्कारवत्यासौ[3] पुत्राभ्यामथ[4] सीतया ।
ऋचेवोदर्चिषं सूर्यं समं मुनिरुपस्थितः ॥ ७६ ॥

**स्वरेति** ॥ अथ स्वर उदात्तादिः । संस्कारः शब्दशुद्धिः । तद्वत्या ऋचा सावित्र्योदर्चिषं सूर्यमिव । पुत्राभ्यामुपलक्षितया सीतया करणेनोदर्चिषं राममसौ मुनिरुपस्थित उपतस्थे ॥

काषायपरिवीतेन स्वपदार्पितचक्षुषा ।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा[5] ॥ ७७ ॥

**काषायेति** ॥ कषायेण रक्तं काषायम् । 'तेन रक्तं रागात्' इत्यण् । तेन परिवीतेन संवृतेन स्वपदार्पितचक्षुषा शान्तेन प्रसन्नेन वपुषैव सा सीता शुद्धा साध्वीत्यन्वमीयतानुमिता ॥

जनास्तदालोकपथात्प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः[6] सर्वे फलिता इव शालयः ॥ ७८ ॥

**जना इति** ॥ तस्याः सीतायाः कर्मण आलोकपथाद्दर्शनमार्गात्प्रतिसंहृतचक्षुषो निवर्तितदृष्टयः सर्वे जनाः । फलिताः शालय इव । अवाङ्मुखा अवनतमुखास्तस्थुः ॥

तां दृष्टिविषये भर्तुर्मुनिरास्थितविष्टरः ।
कुरु निःसंशयं वत्से स्ववृत्ते लोकमित्यशात् ॥ ७९ ॥

---

१ आह्वाययामास. २ संनिमन्त्य. ३ च; इव. ४ सह. ५ सा तथा. ६ अधोमुखाः; उर्वीमुखाः.

शीस्तस्यातिथेः कर्मनिर्वृत्तैः पूर्वपुण्यानिष्पन्नैः फलैः साम्राज्यादिभिर्दूरं दूरतः पश्चात्कृता । स्वफलदानस्य तदानीमनवकाशात्कालान्तरोद्वीक्षणं न चकारेत्यर्थः ॥

बन्धच्छेदं स बद्धानां वधार्हाणामवध्यताम् ।
धुर्याणां च धुरो मोक्षमदोहं चादिशद्गवाम् ॥ १९ ॥

बन्धेति ॥ सोऽतिथिर्बद्धानां बन्धच्छेदं वधार्हाणामवध्यताम् । धुरं वहन्तीति धुर्या बलीवर्दादयः । तेषां धुरो भारस्य मोक्षं गवामदोहं वत्सानां पानार्थं दोहनिवृत्तिं चादिशदादिदेश ॥

क्रीडापतत्रिणोऽप्यस्य पञ्जरस्थाः शुकादयः ।
लब्धमोक्षास्तदादेशाद्यथेष्टगतयोऽभवन् ॥ २० ॥

क्रीडेति ॥ पञ्जरस्थाः शुकादयोऽस्यातिथेः क्रीडापतत्रिणोऽपि । किमुतान्य इत्यपिशब्दार्थः । तदादेशात्तस्यातिथेः शासनाल्लब्धमोक्षाः सन्तो यथेष्टं गतिर्येषां ते स्वेच्छाचारिणोऽभवन् ॥

ततः कक्ष्यान्तरन्यस्तं[1] गजदन्तासनं शुचिः ।
सोत्तरच्छदमध्यास्त नेपथ्यग्रहणाय सः ॥ २१ ॥

तत इति ॥ ततः सोऽतिथिर्नेपथ्यग्रहणाय प्रसाधनस्वीकाराय । कक्ष्यान्तरं हर्म्याङ्गणविशेषः । 'कक्ष्या प्रकोष्ठे हर्म्यादेः' इत्यमरः । तत्र न्यस्तं स्थापितं शुचि निर्मलं सोत्तरच्छदमास्तरणसहितं गजदन्तस्यासनं पीठमध्यास्त । तत्रोपविष्ट इत्यर्थः ॥

तं धूपाश्यानकेशान्तं तोयनिर्णिक्तपाणयः ।
आकल्पसाधनैस्तैस्तैरुपसेदुः प्रसाधकाः ॥ २२ ॥

तमिति ॥ तोयेन निर्णिक्तपाणयः क्षालितहस्ताः प्रसाधका अलंकर्तारो धूपेन गन्धद्रव्यधूपेनाश्यानकेशान्तं शोषितकेशपाशान्तं तमतिथिं तैस्तैराकल्पस्य नेपथ्यस्य साधनैर्गन्धमाल्यादिभिरुपसेदुरुपतस्थुः ॥

[2]तेऽस्य मुक्तागुणोन्नद्धं[3] मौलिमन्तर्गतस्रजम्[4] ।
प्रत्यूपुः पद्मरागेण प्रभामण्डलशोभिना ॥ २३ ॥

त इति ॥ ते प्रसाधका मुक्तागुणेन मौक्तिकसरेणोन्नद्धमुद्बद्धमन्तर्गतस्रजमस्यातिथेर्मौलिं धम्मिल्लं प्रभामण्डलशोभिना पद्मरागेण माणिक्येन प्रत्यूपुः प्रत्युप्तं चक्रुः ॥

चन्दनेनाङ्गरागं च मृगनाभिसुगन्धिना ।
समापय्य ततश्चक्रुः पत्रं विन्यस्तरोचनम् ॥ २४ ॥

चन्दनेनेति ॥ किंच । मृगनाभ्या कस्तूरिकया सुगन्धिना चन्दनेनाङ्गरागमङ्गविलेपनं समापय्य समाप्य ततोऽनन्तरं विन्यस्ता रोचना गोरोचना यस्मिंस्तत्पत्रं पत्ररचनं चक्रुः ॥

आमुक्ताभरणः स्रग्वी हंसचिह्नदुकूलवान् ।
आसीदतिशयप्रेक्ष्यः स राज्यश्रीवधूवरः ॥ २५ ॥

आमुक्तेति ॥ आमुक्ताभरणः आसञ्जिताभरणः । स्रजोऽस्य सन्तीति स्रग्वी ॥ 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः । हंसाश्चिह्नमस्येति हंसचिह्नं यद्दुकूलं तद्वान् । अत्र बहुव्रीहिणैवार्थसिद्धेर्मतुबानर्थक्येऽपि सर्वधनीत्यादिवत्कर्मधारयादपि मत्वर्थीयं प्रत्ययमिच्छन्ति । एवमन्यत्रापि द्रष्टव्यम् । राज्यश्रीरेव वधूर्नवोढा तस्या वरो वोढा । 'वधूः स्नुषा नवोढा स्त्री वरो जामातृषिङ्गयोः' इति विश्वः । सोऽतिथिरतिशयेन प्रेक्ष्यो दर्शनीय आसीत् । वरोऽप्येवंविशेषणः ॥

नेपथ्यदर्शिनश्छाया तस्यादर्शे हिरण्मये ।
विरराजोदिते सूर्ये मेरौ कल्पतरोरिव ॥ २६ ॥

नेपथ्येति ॥ हिरण्मये सौवर्ण आदर्शे दर्पणे नेपथ्यदर्शिनो वेषं पश्यतस्तस्यातिथेश्छाया प्रतिबिम्बम् । उदिते सूर्ये दर्पणकल्पे मेरौ यः कल्पतरुस्तस्य छायेव । विरराज । तस्य सूर्यसंक्रान्तबिम्बस्य संभवान्मेरावित्युक्तम् ॥

स राजककुदव्यग्रपाणिभिः पार्श्ववर्तिभिः ।
ययावुदीरितालोकः सुधर्मानवमां सभाम् ॥ २७ ॥

स इति ॥ सोऽतिथी राजककुदानि राजचिह्नानि छत्रचामरादीनि । 'प्राधान्ये राजलिङ्गे च वृषाङ्के ककुदोऽस्त्रियाम्' इत्यमरः । तेषु व्यग्राः पाणयो येषां तैः पार्श्ववर्तिभिर्जनैरुदीरितालोक उच्चारितजयशब्दः । 'आलोको जयशब्दः स्यात्' इति हलायुधः । सुधर्माया देवसभाया अनवमामन्यूनां सभामास्थानीं ययौ । 'स्यात्सुधर्मा देवसभा' इत्यमरः ॥

वितानसहितं तत्र भेजे पैतृकमासनम् ।
चूडामणिभिरुद्धृष्टपादपीठं महीक्षिताम् ॥ २८ ॥

वितानेति ॥ तत्र सभायां वितानेनोल्लोचेन सहितम् । 'अस्त्री वितानमुल्लोचः' इत्यमरः । महीक्षितां राज्ञां चूडामणिभिः शिरोरत्नैरुद्धृष्टमुल्लिखितं पादपीठं यस्य तत् । पितुरिदं पैतृकम् । 'ऋतष्ठञ्' इति ठञ्प्रत्ययः । आसनं सिंहासनं भेजे ॥

शुशुभे तेन चाक्रान्तं मङ्गलायतनं[1] महत् ।
श्रीवत्सलक्षणं वक्षः कौस्तुभेनेव कैशवम् ॥ २९ ॥

**शुशुभ इति** ॥ तेन चाक्रान्तम् । श्रीवत्सो नाम गृहविशेषः । तल्लक्षणं श्रीवत्सरूपम् । 'श्रीवत्सनन्द्यावर्तादिविच्छेदा बहवो द्वयोः' इति सज्जनः । महदधिकं मङ्गलायतनं मङ्गलगृहं सभारूपम् । कौस्तुभेन मणिनाक्रान्तं श्रीवत्सलक्षणम् । केशवस्येदं कैशवम् । वक्ष इव । शुशुभे ॥

बभौ भूयः कुमारत्वादाधिराज्यमवाप्य[2] सः ।
रेखाभावादुपारूढः[3] सामग्र्यमिव चन्द्रमाः ॥ ३० ॥

**बभाविति** ॥ सोऽतिथिः कुमारत्वाद्बाल्याद्भूयो यौवराज्यमवाप्यैवानन्तरम् । अधिराजस्य भाव आधिराज्यं महाराज्यमवाप्य । रेखाभावादर्धेन्दुत्वमवाप्यैव सामग्र्यमुपारूढः पूर्णतां गतश्चन्द्रमा इव । बभौ इति व्याख्यानम् । तदपि यौवराज्याभावनिश्चये ज्याय एव ॥

प्रसन्नमुखरागं तं स्मितपूर्वाभिभाषिणम्[4] ।
मूर्तिमन्तममन्यन्त विश्वासमनुजीविनः ॥ ३१ ॥

**प्रसन्नेति** ॥ प्रसन्नो मुखरागो मुखकान्तिर्यस्य तं स्मितपूर्वं यथा तथाभिभाषिणमाभाषणशीलं तमातिथिमनुजीविनो मूर्तिमन्तं विग्रहवन्तं विश्वासं विस्रम्भममन्यन्त । 'समौ विश्वासविस्रम्भौ' इत्यमरः ॥

स पुरं पुरुहूतश्रीः कल्पद्रुमनिभध्वजाम् ।
क्रममाणश्चकार द्यां नागेनैरावतौजसा[5] ॥ ३२ ॥

**स इति** ॥ पुरुहूतश्रीः सोऽतिथिः कल्पद्रुमाणां निभाः समाना ध्वजा यस्यास्तां पुरमयोध्यामैरावतस्य ओज इवौजो बलं यस्य तेन नागेन कुञ्जरेण क्रममाणश्चरन् । 'अनुपसर्गाद्वा' इति वैकल्पिकमात्मनेपदम् । द्यां चकार । स्वर्गलोकसदृशीं चकारेत्यर्थः । 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः ॥

तस्यैकस्योच्छ्रितं छत्रं मूर्ध्नि तेनामलत्विषा ।
पूर्वराजवियोगौष्म्यं[6] कृत्स्नस्य जगतो हृतम्[7] ॥ ३३ ॥

**तस्येति** ॥ तस्यैकस्य मूर्ध्नि छत्रमुच्छ्रितमुन्नमितम् । अमलत्विषा तेन छत्रेण कृत्स्नस्य जगतः पूर्वराजस्य कुशस्य वियोगेन यदौष्म्यं संतापस्तत्कृतं नाशितम् ।

---

१ मण्डलायतनम्. २ अधिराज्यम्. ३ लेखाभावात्. ४ स्मितपूर्वाभिभाषणम्. ५ अमिततेजसा.

अत्र छत्रोन्नमनसंतापहरणलक्षणयोः कारणकार्ययोर्भिन्नदेशत्वादसंगतिरलंकारः । तदुक्तम्—'कार्यकारणयोर्भिन्नदेशत्वे सत्यसंगतिः' इति ॥

**धूमादग्नेः शिखाः पश्चादुदयादंशवो रवेः ।**
**सोऽपीत्य तेजसां वृत्तिं सममेवोत्थितो गुणैः ॥ ३४ ॥**

**धूमादिति** ॥ अग्नेर्धूमात्पश्चात् । अनन्तरमित्यर्थः । शिखा ज्वालाः । रवेरुदयात्पश्चादनन्तरमंशवः । उत्तिष्ठन्त इति शेषः । सोऽतिथिस्तेजसामग्न्यादीनां वृत्तिं स्वभावमतीत्य गुणैः समं सहैवोत्थित उदितः । अपूर्वमिदमित्यर्थः ॥

**तं प्रीतिविशदैर्नेत्रैरन्वयुः पौरयोषितः ।**
**शरत्प्रसन्नैर्ज्योतिर्भिर्विभावर्य इव ध्रुवम् ॥ ३५ ॥**

**तमिति** ॥ पौरयोषितः प्रीत्या विशदैः प्रसन्नैर्नेत्रैः करणैस्तमतिथिमन्वयुरनुजग्मुः । सदृष्टिप्रसारमद्राक्षुरित्यर्थः । कथमिव । शरदि प्रसन्नैर्ज्योतिर्भिर्नक्षत्रैर्विभावर्यो रात्रयो ध्रुवमिव । ध्रुवपाशबद्धत्वात्ताराचक्रस्येत्यर्थः ॥

**अयोध्यादेवताश्चैनं प्रशस्तायतनार्चिताः ।**
**अनुदध्युरनुध्येयं सांनिध्यैः प्रतिमागतैः ॥ ३६ ॥**

**अयोध्येति** ॥ प्रशस्तेष्वायतनेष्वालयेष्वर्चिता अयोध्यादेवताश्चानुध्येयमनुग्राह्यमेनमतिथिं प्रतिमागतैरर्चासंक्रान्तैः सांनिध्यैः संनिधानैरनुदध्युरनुजगृहुः । 'अनुध्यानमनुग्रहः' इत्युत्पलमालायाम् । तदनुग्रहबुद्ध्या संनिदधुरित्यर्थः ॥

**यावन्नाश्यायते वेदिरभिषेकजलाप्लुता ।**
**तावदेवास्य वेलान्तं प्रतापः प्राप दुःसहः ॥ ३७ ॥**

**यावदिति** ॥ अभिषेकजलैराप्लुता सिक्ता वेदिरभिषेकवेदिर्यावन्नाश्यायते न शुष्यति । कर्तरि लट् । तावदेवास्य राज्ञो दुःसहः प्रतापो वेलान्तं वेलापर्यन्तं प्राप ॥

**वसिष्ठस्य गुरोर्मन्त्राः सायकास्तस्य धन्विनः ।**
**किं तत्साध्यं यदुभये साधयेयुर्न संगताः ॥ ३८ ॥**

**वसिष्ठस्येति** ॥ गुरोर्वसिष्ठस्य मन्त्राः । धन्विनस्तस्यातिथेः सायकाः । इत्युभये संगताः सन्तो यत्साध्यं न साधयेयुस्तादृक्साध्यं किम् । न किंचिदित्यर्थः । तेषामसाध्यं नास्तीति भावः ॥

**स धर्मस्थसखः शश्वदर्थिप्रत्यर्थिनां स्वयम् ।**
**ददर्श संशयच्छेद्यान्व्यवहारानतन्द्रितः ॥ ३९ ॥**

**स इति** ॥ धर्मे तिष्ठन्तीति धर्मस्थाः सभ्याः । 'राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः' इत्युक्तलक्षणाः । तेषां सखा धर्मस्थसखः । तत्सहित इत्यर्थः । अतन्द्रितोऽनलसः स नृपः शश्वत् । अन्वहमित्यर्थः । अर्थिनां साध्यार्थवतां प्रत्यर्थिनां तद्विरोधिनां च संशयच्छेद्यान्संशयाद्धेतोच्छेद्यान्परिच्छेद्यान् । संदिग्धत्वादवश्यनिर्णेयानित्यर्थः । व्यवहारानृणादानादिविवादान्स्वयं ददर्शानुसंदधौ । न तु प्राड्विवाकमेव नियुक्तवानित्यर्थः । अत्र याज्ञवल्क्यः—'व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह' इति ॥

ततः परमभिव्यक्तसौमनस्यनिवेदितैः ।
युयोज पाकाभिमुखैर्भृत्यान्विज्ञापनाफलैः ॥ ४० ॥

**तत इति** ॥ ततः परं व्यवहारदर्शनानन्तरं भृत्याननुजीविनः । अभिव्यक्तं मुखप्रसादादिलिङ्गैः स्फुटीभूतं यत्सौमनस्यं स्वामिनः प्रसन्नत्वं तेन निवेदितैः सूचितैः पाकाभिमुखैः सिद्ध्युन्मुखैर्विज्ञापनानां विज्ञप्तीनां फलैः प्रेप्सितार्थैर्युयोज योजयामास । अत्र बृहस्पतिः—'नियुक्तः कर्मनिष्पत्तौ विज्ञप्तौ च यदृच्छया । भृत्यान्धनैर्मानयंस्तु नवोऽप्यक्षोभ्यतां व्रजेत् ।' इति ॥ कविश्च वक्ष्यति—'अक्षोभ्यः–' ( १७ । ४४ ) इति । अत्र सौमनस्यफलयोजनादिभिर्नृपस्य वृक्षसमाधिर्ध्वन्यत इत्यनुसंधेयम् ॥

प्रजास्तद्गुरुणा नद्यो नभसेव विवर्धिताः ।
तस्मिंस्तु भूयसीं वृद्धिं नभस्ये ता इवाययुः ॥ ४१ ॥

**प्रजा इति** ॥ प्रजास्तस्यातिथेर्गुरुणा पित्रा कुशेन । नभसा श्रवणमासेन नद्य इव । विवर्धिताः तस्मिन्नतिथौ तु नभस्ये भाद्रपदे मासे ता इव नद्य इव भूयसीं वृद्धिमभ्युदयमाययुः । प्रजापोषणेन पितरमतिशयितवानित्यर्थः ॥

यदुवाच न तन्मिथ्या यद्ददौ न जहार तत् ।
सोऽभूद्भग्नव्रतः शत्रूनुद्धृत्य प्रतिरोपयन् ॥ ४२ ॥

**यदिति** ॥ सोऽतिथिर्यद्वाक्यं दानत्राणादिविषयमुवाच तन्न मिथ्यानृतं नाभूत् । यद्वस्तु ददौ तन्न जहार न पुनराददे । किंतु शत्रूनुद्धृत्योत्खाय प्रतिरोपयन्पुनः स्थापयन्भग्नव्रतो भग्ननियमोऽभूत् ॥

वयोरूपविभूतीनामेकैकं मदकारणम् ।
तानि तस्मिन्समस्तानि न तस्योत्सिषिचे मनः ॥ ४३ ॥

**वय इति** ॥ वयोरूपविभूतीनां यौवनसौन्दर्यैश्वर्याणां मध्य एकैकं मदकारणं म-

मदहेतुः। तानि मदकारणानि तस्मिन्राज्ञि समस्तानि। मिलितानीति शेषः। तथापि तस्यातिथेर्मनो नोत्सिषिचे न जगर्व । सिञ्चतेः स्वरितेत्त्वादात्मनेपदम् । अत्र वयोरूपादीनां गर्वहेतुत्वान्मदस्य च मदिराकार्यत्वेनातत्कारकत्वान्मदशब्देन गर्वो लक्ष्यत इत्याहुः। उक्तं च— 'ऐश्वर्यरूपतारुण्यकुलविद्याबलैरपि । इष्टलाभादिना ह्येषामवज्ञा गर्व ईरितः । मदस्त्वानन्दसंमोहः संभेदो मदिराकृतः ॥' इति । अत एव कविनापि 'उत्सिषिचे' इत्युक्तम्, नतु 'उन्ममाद' इति ॥

इत्थं जनितरागासु प्रकृतिष्वनुवासरम् ।
अक्षोभ्यः स नवोऽप्यासीद्दृढमूल इव द्रुमः ॥ ४४ ॥

इत्थमिति ॥ इत्थमनुवासरमन्वहं प्रकृतिषु प्रजासु जनितरागासु सतीषु सराजा नवोऽपि । दृढमूलो द्रुम इव । अक्षोभ्योऽप्रधृष्य आसीत् ॥

अनित्याः शत्रवो बाह्या विप्रकृष्टाश्च ते यतः ।
अतः सोऽभ्यन्तरान्नित्याञ्षट्पूर्वमजयद्रिपून् ॥ ४५ ॥

अनित्या इति ॥ यतो बाह्याः शत्रवः प्रतिनृपा अनित्याः । द्विषन्ति स्निह्यन्ति चेत्यर्थः । किंच ते बाह्या विप्रकृष्टा दूरस्थाश्च । अतः सोऽभ्यन्तरानन्तर्वर्तिनो नित्याञ्षड्रिपून्कामक्रोधादीन्पूर्वमजयत् । अन्तःशत्रुजये बाह्या अपि न दुर्जया इति भावः ॥

प्रसादाभिमुखे तस्मिंश्चपलापि स्वभावतः ।
निकषे हेमरेखेव श्रीरासीदनपायिनी ॥ ४६ ॥

प्रसादेति ॥ स्वभावतश्चपला चञ्चलापि श्रीः प्रसादाभिमुखे तस्मिन्नृपे । निकषे निकषोपले हेमरेखेव । अनपायिनी स्थिरासीत् ॥

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥ ४७ ॥

कातर्यमिति॥ केवला शौर्यवर्जिता नीतिः कातर्यं भीरुत्वम् । शौर्यं केवलमित्यनुषञ्जनीयम् । केवलं नीतिरहितं शौर्यं श्वापदचेष्टितम् । व्याघ्रादिचेष्टाप्रायमित्यर्थः। 'व्याघ्रादयो वनचराः पशवः श्वापदा मताः' इति हलायुधः। अतो हेतोः सोऽतिथिः समेताभ्यां संगताभ्यामुभाभ्यां नीतिशौर्याभ्यां सिद्धिं जयप्राप्तिमन्वियेष गवेषितवान् ॥

न तस्य मण्डले राज्ञो न्यस्तप्रणिधिदीधितेः ।
अदृष्टमभवत्किंचिद्व्यभ्रस्येव विवस्वतः ॥ ४८ ॥

न तस्येति ॥ न्यस्ताः सर्वतः प्रहिताः प्रणिधयश्चरा एव दीधितयो रश्मयो यस्य तस्य । 'प्रणिधिः प्रार्थने चरे' इति शाश्वतः । तस्य राज्ञः । व्यभ्रस्य निर्मेघस्य विवस्वतः सूर्यस्येव । मण्डले स्वविषये किंचिदल्पमप्यदृष्टमज्ञातं नाभवन्नासीत् । स चारचक्षुषा सर्वमपश्यदित्यर्थः ॥

रात्रिंदिवविभागेषु यदादिष्टं महीक्षिताम् ।
तत्सिषेवे नियोगेन स विकल्पपराङ्मुखः ॥ ४९ ॥

रात्रिंदिवेति ॥ रात्रौ च दिवा च रात्रिंदिवम् । 'अचतुर–' इत्यादिनाधिकरणार्थे द्वन्द्वेऽच्प्रत्ययान्तो निपातः । अव्ययान्तत्वादव्ययत्वम् । अत्र षष्ठ्यर्थलक्षणया रात्रिंदिवमिति । अहोरात्रयोरित्यर्थः । तयोर्विभागा अंशाः प्रहरादयः । तेषु महीक्षितां राज्ञां यदादिष्टमिदमस्मिन्काले कर्तव्यमिति मन्वादिभिरुपदिष्टं तत्स राजा विकल्पपराङ्मुखः संशयरहितः सन् । नियोगेन निश्चयेन सिषेवे । अनुष्ठितवानित्यर्थः । अत्र कौटिल्यः—'कार्याणां नियोगविकल्पसमुच्चया भवन्ति । अनेनैवोपायेन नान्येनेति नियोगः । अनेन वान्येन वेति विकल्पः । अनेन चेति समुच्चयः' । इति ॥

मन्त्रः प्रतिदिनं तस्य बभूव सह मन्त्रिभिः ।
स जातु सेव्यमानोऽपि गुप्तद्वारो न सूच्यते ॥ ५० ॥

मन्त्र इति ॥ तस्य राज्ञः प्रतिदिनं मन्त्रिभिः सह मन्त्रो विचारो बभूव । स मन्त्रः सेव्यमानोऽप्यन्वहमावर्त्यमानोऽपि जातु कदाचिदपि न सूच्यते न प्रकाश्यते । तत्र हेतुर्गुप्तद्वार इति । संवृतेङ्गिताकारादिज्ञानमार्ग इत्यर्थः ॥

परेषु स्वेषु च क्षिप्तैरविज्ञातपरस्परैः ।
सोऽपसर्पैर्जजागार यथाकालं स्वपन्नपि ॥ ५१ ॥

परेष्विति ॥ यथाकालमुक्तकालानतिक्रमेण स्वपन्नपि सोऽतिथिः परेषु शत्रुषु स्वेषु स्वकीयेषु च । मन्त्र्यादितीर्थेष्विति शेषः । क्षिप्तैः प्रहितैरविज्ञाताः परस्परे येषां तैः । अन्योन्याविज्ञातैरित्यर्थः । अपसर्पैश्चरैः । 'अपसर्पश्चरः स्पशः' इत्यमरः । जजागार बुद्धवान् । चारमुखेन सर्वदा सर्वमज्ञासीदित्यर्थः । अत्र कामन्दकः—'चारान्विचारयेत्तीर्थेष्वात्मनश्च परस्य च । पाषण्ड्यादीनविज्ञातानन्योन्यमितरैरपि ।' इति ॥

दुर्गाणि दुर्ग्रहाण्यासंस्तस्य रोद्धुरपि द्विषाम् ।
न हि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः ॥ ५२ ॥

दुर्गाणीति ॥ द्विषां रोद्धू रोधकस्यापि । न तु स्वयं रोध्यस्येत्यर्थः । तस्य राज्ञो दुर्ग्रहाणि परैर्दुर्धर्षाणि दुर्गाणि महीदुर्गादीन्यासन् । न च निर्भीकस्य किं दुर्गैरिति वाच्यमित्यर्थान्तरन्यासमुखेनाह —न हीति । गजानास्कन्दति हिनस्तीति गजास्कन्दी सिंहो भयाद्धेतोः । गिरिगुहासु शेत इति गिरिगुहाशयो न हि । किंतु स्वभाव एवेति शेषः । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः । अत्र मनुः—'धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्ष्यमेव वा । नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम् ॥' इति ॥

भव्यमुख्याः समारम्भाः प्रत्यवेक्ष्या निरत्ययाः ।
गर्भशालिसधर्माणस्तस्य गूढं विपेचिरे ॥ ५३ ॥

भव्येति ॥ भव्यमुख्या कल्याणप्रधानाः । न तु विपरीताः । प्रत्यवेक्ष्या एतावत्कृतमेतावत्कर्तव्यमित्यनुसंधानेन विचारणीयाः । अतएव निरत्यया निर्बाधा गर्भेऽभ्यन्तरे पच्यन्ते ये शालयस्तेषां सधर्माणः । अतिनिगूढा इत्यर्थः । 'धर्मादनिच्केवलात्' इत्यनिच्प्रत्ययः समासान्तः । तस्य राज्ञः समारभ्यन्त इति समारम्भाः कर्माणि गूढमप्रकाशं विपेचिरे । फलिता इत्यर्थः । 'फलानुमेयाः प्रारम्भाः' इति भावः ॥

अपथेन प्रववृते न जातूपचितोऽपि सः ।
वृद्धो नदीमुखेनैव[2] प्रस्थानं लवणाम्भसः[3] ॥ ५४ ॥

अपथेनेति ॥ सोऽतिथिरुपचितोऽपि वृद्धिं गतोऽपि सन् । जातु कदाचिदप्यपथेन कुमार्गेण न प्रवव्टते न प्रवृत्तः । मर्यादां न जहावित्यर्थः । तथाहि । लवणाम्भसो लवणसागरस्य वृद्धौ पूरोत्पीडे सत्यां नदीमुखेनैव नदीप्रवेशमार्गेणैव प्रस्थानं निःसरणम् । न त्वन्यथेत्यर्थः ॥

कामं प्रकृतिवैराग्यं सद्यः शमयितुं क्षमाः ।
यस्य कार्यः प्रतीकारः स तन्नैवोदपादयत् ॥ ५५ ॥

काममिति ॥ प्रकृतिवैराग्यं प्रजाविरागम् । दैवादुत्पन्नमिति शेषः । सद्यः कामं सम्यक्शमयितुं प्रतिकर्तुं क्षमः शक्तः स राजा यस्य प्रकृतिवैराग्यस्य प्रतीकारः कार्यः कर्तव्यः । अनर्थहेतुत्वादित्यर्थः । तद्वैराग्यं नोदपादयत् । उत्पन्नप्रतीकारादनुत्पादनं वरमिति भावः । अत्र कौटिल्यः—'क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम् । विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयम् ॥' तस्मात्प्रकृतीनां विरागकारणानि नोत्पादयेदित्यर्थः ॥

शक्येष्वेवाभवद्यात्रा तस्य शक्तिमतः सतः ।
समीरणसहायोऽपि नाम्भःप्रार्थी दवानलः[4] ॥ ५६ ॥

शक्येष्विति ॥ शक्तिमतः शक्तिसंपन्नस्यापि सतस्तस्य राज्ञः शक्येषु शक्तिविषयेषु स्वस्माद्धीनबलेष्वेव विषये यात्रा दण्डयात्राभवत् । न तु समधिकेष्वित्यर्थः । तथाहि । समीरणसहायोऽपि दवानलोऽम्भःप्रार्थी जलान्वेषी न । दग्धुमिति शेषः । किंतु तृणकाष्ठादिकमेवान्विष्यतीत्यर्थः । अत्र कौटिल्यः—'समज्यायोभ्यां संदधीत हीनेन विगृह्णीयात्' इति ॥

न धर्ममर्थकामाभ्यां बबाधे न च तेन तौ ।
नार्थं कामेन कामं वा सोऽर्थेन सदृशस्त्रिषु ॥ ५७ ॥

न धर्ममिति ॥ स राजार्थकामाभ्यां धर्मं न बबाधे न नाशितवान् । तेन धर्मेण च तावर्थकामौ न । अर्थं कामेन कामं वार्थेन न बबाधे । एकत्रैवासक्तो नाभूदित्यर्थः । किंतु त्रिषु धर्मार्थकामेषु सदृशस्तुल्यवृत्तिः । अभूदित्यर्थः ॥

हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते ।
तेन मध्यमशक्तीनि मित्राणि स्थापितान्यतः ॥ ५८ ॥

हीनानीति ॥ मित्राणि हीनान्यतिक्षीणानि चेदनुपकर्तॄण्यनुपकारीणि । प्रवृद्धान्यतिसमृद्धानि चेद्विकुर्वते विरुद्धं चेष्टन्ते । अपकुर्वत इत्यर्थः । 'अकर्मकाच्च' इत्यात्मनेपदम् । अतः कारणात्तेन राज्ञा मित्राणि सुहृदः । 'मित्रं सुहृदि मित्रोऽर्के' इति विश्वः । मध्यमशक्तीनि नातिक्षीणोच्छ्रितानि यथा तथा स्थापितानि ॥

'शक्येष्वेवाभवद्यात्रा' ( १७।५६ ) इत्यादिनोक्तमर्थं सोपस्कारमाह—

परात्मनोः परिच्छिद्य शक्त्यादीनां बलाबलम् ।
ययावेभिर्बलिष्ठश्चेत्परस्मादास्त सोऽन्यथा ॥ ५९ ॥

परेति ॥ सोऽतिथिः परात्मनोः शत्रोरात्मनश्च शक्त्यादीनां शक्तिदेशकालादीनां बलाबलं न्यूनाधिकभावं परिच्छिद्य निश्चित्य । एभिः शक्त्यादिभिः परस्माच्छत्रोर्बलिष्ठः स्वयमतिशयेन बलवांश्चेत् । बलशब्दान्मतुबन्तादिष्ठन्प्रत्ययः । 'विन्मतोर्लुक्' इति मतुपो लुक् । ययौ यात्रां चक्रे । अन्यथा बलिष्ठश्चेदास्तातिष्ठत् । न ययावित्यर्थः । अत्र मनुः—'यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् । परस्य विपरीतं चेत्तदा यायादरीन्प्रति । यदा तु स्यात्परिक्षीणो वाहनेन बलेन च । तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीन् ॥' इति ॥

[2]कोशेनाश्रयणीयत्वमिति तस्यार्थसंग्रहः ।
अम्बुगर्भो हि जीमूतश्चातकै[3]रभिनन्द्यते ॥ ६० ॥

कोशेनेति ॥ कोशेनार्थचयेनाश्रयणीयत्वं भजनीयत्वम् । भवतीति शेषः । इति हेतोस्तस्य राज्ञः कर्तुः अर्थसंग्रहः । न तु लोभादित्यर्थः । तथाहि । अम्बु गर्भे यस्य सोऽम्बुगर्भः । जीवनस्य जलस्य मूतः पुटबन्धो जीमूतो मेघः । 'मूङ् बन्धने' । पृषोदरादित्वात्साधुः । चातकैरभिनन्द्यते सेव्यते । अत्र कामन्दकः—'धर्महेतोस्तथार्थाय भृत्यानां रक्षणाय च । आपदर्थं च संरक्ष्यः कोशो धर्मवता सदा ॥' इति ॥

परकर्मापहः सोऽभूदुद्यतः स्वेषु कर्मसु ।
आवृणोदात्मनो रन्ध्रं रन्ध्रेषु[1] प्रहरन्रिपून्[2] ॥ ६१ ॥

परकर्मेति ॥ स राजा परेषां कर्माणि सेतुवार्तादीन्यपहन्तीति परकर्मापहः सन् । 'अन्येष्वपि दृश्यते' इत्यपिशब्दसामर्थ्याद्धन्तेर्डप्रत्ययः । स्वेषु कर्मसूद्यत उद्युक्तोऽभूत् । किंच । रिपून्रन्ध्रेषु प्रहरन्नात्मनो रन्ध्रं व्यसनादिकमावृणोत्संवृतवान् । अत्र मनुः—'नास्य च्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु । गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥' इति ॥

पित्रा[3] संवर्धितो नित्यं कृतास्त्रः सांपरायिकः[4] ।
तस्य दण्डवतो दण्डः स्वदेहान्न व्यशिष्यत[5] ॥ ६२ ॥

पित्रेति ॥ दण्डो दमः सैन्यं वा । तद्वतो दण्डवतो दण्डसंपन्नस्य तस्य राज्ञः पित्रा कुशेन नित्यं संवर्धितः पुष्टः कृतास्त्रः शिक्षितास्त्रः । संपरायो युद्धम् । 'युद्धायत्योः संपरायः' इत्यमरः । तमर्हतीति सांपरायिकः । 'तदर्हति' इति ठक्प्रत्ययः । दण्डः सैन्यम् । 'दण्डो यमे मानभेदे लगुडे दमसैन्ययोः' इति विश्वः । स्वदेहान्न व्यशिष्यत नाभिद्यत । स्वदेहेऽपि विशेषणानि योज्यानि । मूलबलं स्वदेहमिवारक्षदित्यर्थः ॥

सर्पस्येव शिरोरत्नं नास्य शक्तित्रयं परः ।
स चकर्ष परस्मात्तदयस्कान्त इवायसम् ॥ ६३ ॥

सर्पस्येति ॥ सर्पस्य शिरोरत्नमिव । अस्य राज्ञः शक्तित्रयं परः शत्रुर्न चकर्ष । स तु परस्माच्छत्रोस्तच्छक्तित्रयम् । अयस्कान्तो मणिविशेष आयसं लोहविकारमिव चकर्ष ॥

वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव ।
सार्थाः स्वैरं[6] स्वकीयेषु चेरुर्वेश्मस्विवाद्रिषु ॥ ६४ ॥

---

१ रन्ध्रे च. २ द्विषाम्. ३ पितृसंवर्धितः. ४ सांपरायणः. ५ नावशिष्यत. ६ स्वैरं सार्थाः.

वापीष्विति ॥ स्रवन्तीषु नदीषु वापीषु दीर्घिकास्विव । 'वापी तु दीर्घिका' इत्यमरः । वनेष्वरण्येषूपवनेष्वारामेष्विव । 'आरामः स्यादुपवनम्' इत्यमरः । अद्रिषु स्वकीयेषु वेश्मस्विव । सार्था वणिक्प्रभृतयः स्वैरं स्वेच्छया चेरुश्चरन्ति स्म ॥

तपो रक्षन्स विघ्नेभ्यस्तस्करेभ्यश्च संपदः ।
यथास्वमाश्रमैश्चक्रे वर्णैरपि षडंशभाक् ॥ ६५ ॥

तप इति ॥ विघ्नेभ्यस्तपो रक्षन् । तस्करेभ्यः संपदश्च रक्षन् । स राजाश्रमैर्ब्रह्मचर्यादिभिर्वर्णैरपि ब्राह्मणादिभिश्च यथास्वं स्वमनतिक्रम्य षडंशभाक्चक्रे । यथाक्रममाश्रमैस्तपसो वर्णैः संपदां च षष्ठांशभाक्कृत इत्यर्थः । षष्ठोऽंशः षडंशः । संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमुक्तं प्राक् ॥

खनिभिः सुषुवे रत्नं क्षेत्रैः सस्यं वनैर्गजान् ।
दिदेश वेतनं तस्मै रक्षासदृशमेव भूः ॥ ६६ ॥

खनिभिरिति ॥ भूर्भूमिस्तस्मै राज्ञे रक्षासदृशं रक्षणानुरूपमेव वेतनं भृतिं दिदेश ददौ । कथम् । खनिभिराकरैः । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । रत्नं माणिक्यादिकं सुषुवेऽजीजनत् । क्षेत्रैः सस्यम् । वनैर्गजान्हस्तिनः सुषुवे ॥

स गुणानां बलानां च षण्णां षण्मुखविक्रमः ।
बभूव विनियोगज्ञः साधनीयेषु वस्तुषु ॥ ६७ ॥

स इति ॥ षण्मुखविक्रमः स राजा षण्णां गुणानां संधिविग्रहादीनां बलाना मूलभृत्यादीनां च साधनीयेषु वस्तुषु साध्येष्वर्थेषु विनियोगं जानातीति विनियोगस्य ज्ञ इति वा विनियोगज्ञः । कर्मविवक्षायामुपपदसमासः । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । शेषविवक्षायां षष्ठीसमासः । 'इगुपध—' इत्यादिना कप्रत्ययः । बभूव । 'इदमत्र प्रयोक्तव्यम्' इत्याद्यज्ञासीदित्यर्थः ॥

इति क्रमात्प्रयुञ्जानो राजनीतिं चतुर्विधाम् ।
आ तीर्थादप्रतीघातं स तस्याः फलमानशे ॥ ६८ ॥

इतीति ॥ इति चतुर्विधाम् । सामाद्युपायैरिति शेषः । राजनीतिं दण्डनीतिं क्रमात्सामादिक्रमादेव प्रयुञ्जानः स राजा तीर्थान्मन्त्र्याद्यष्टादशात्मकतीर्थपर्यन्तम् । 'योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यात्' इति हलायुधः । तस्या नीतेः फलमप्रतीघातमप्रतिबन्धं यथा तथानशे प्राप्तवान् । 'मन्त्रादिषु यमुद्दिश्य य उपायः प्रयुज्यते । स तस्य फलति' इत्यर्थः ॥

कूटयुद्धविधिज्ञेऽपि तस्मिन्सन्मार्गयोधिनि।
भेजेऽभिसारिकावृत्तिं जयश्रीर्वीरगामिनी[1] ॥ ६९ ॥

कूटेति ॥ कूटयुद्धविधिज्ञेऽपि कपटयुद्धप्रकाराभिज्ञेऽपि सन्मार्गेण योधिनि धर्मयोद्धरि तस्मिन्नतिथौ वीरगामिनी जयश्रीरभिसारिकावृत्तिं भेजे। 'कान्तार्थिनी तु या याति संकेतं साभिसारिका' इत्यमरः। जयश्रीस्तमन्विष्यागच्छदित्यर्थः ॥

प्रायः[2] प्रतापभग्नत्वादरीणां तस्य दुर्लभः।
रणो गन्धद्विपस्येव गन्धभिन्नान्यदन्तिनः[3] ॥ ७० ॥

प्राय इति ॥ अरीणां सर्वेषामपि प्रतापेनातितेजसैव भग्नत्वात्तस्य राज्ञः। गन्धेन मदगन्धेनैव भिन्ना भग्ना अन्ये दन्तिनो येन तस्य गन्धद्विपस्येव। प्रायः प्रायेण रणो दुर्लभः। खलर्थयोगेऽपि शेषविवक्षायां षष्ठीमिच्छन्तीत्युक्तम् ॥

प्रवृद्धौ हीयते चन्द्रः समुद्रोऽपि तथाविधः।
स तु तत्समवृद्धिश्च न चाभूत्ताविव क्षयी ॥ ७१ ॥

प्रवृद्धाविति ॥ प्रवृद्धौ सत्यां चन्द्रो हीयते। समुद्रोऽपि तथाविधश्चन्द्रवदेव प्रवृद्धौ हीयते। 'प्रवृद्धः' इति वा पाठः। स राजा तु ताभ्यां चन्द्रसमुद्राभ्यां समा वृद्धिर्यस्य स तत्समवृद्धिश्चाभूत्। तौ चन्द्रसमुद्राविव क्षयी। 'जिदृक्षि—' इत्यादिनेनिप्रत्ययः। नाभूत् ॥

सन्तस्[4]तस्याभिगमनादत्यर्थं महतः[5] कृशाः।
उदधेरिव जीमूताः प्रापुर्दातृत्वमर्थिनः[6] ७२ ॥

सन्त इति ॥ अत्यर्थं कृशा दरिद्रा अत एवार्थिनो याचनशीलाः सन्तो विद्वांसो महतस्तस्य राज्ञोऽभिगमनात् उदधेरभिगमनाज्जीमूता इव। दातृत्वं प्रापुः। अर्थिषु दानभोगपर्याप्तं धनं प्रयच्छतीत्यर्थः ॥

स्तूयमानः स जिह्राय स्तुत्यमेव समाचरन्।
तथापि ववृधे[7] तस्य तत्कारिद्वेषिणो[8] यशः ॥ ७३ ॥

स्तूयमान इति ॥ स राजा स्तुत्यं स्तोत्रार्हमेव यत्तदेव समाचरन्नत एव स्तूयमानः सन्। जिह्राय ललज्ज। तथापि ह्रीणत्वेऽपि तत्कारिणः स्तोत्रकारिणो द्वेष्टीति तत्कारिद्वेषिणस्तस्य राज्ञो यशो ववृधे। 'गुणाढ्यस्य सतः पुंसः स्तुतौ लज्जैव भूषणम्' इति भावः ॥

---

१ वीरकामिनी. २ आसीत्. ३ गन्धभग्नानि. ४ जनाः. ५ अत्यर्थमहतः; अत्यन्तं महितः. ६ अर्थिषु, अर्थिनाम्. ७ पप्रथे. ८ तत्कार्यद्वेषिणः.

दुरितं दर्शनेन[1] घ्नंस्तत्त्वार्थेन नुदंस्तमः ।
प्रजाः स्वतन्त्रयांचक्रे[2] शश्वत्[3]सूर्य इवोदितः ॥ ७४ ॥

दुरितमिति ॥ स राजा । उदितः सूर्य इव । दर्शनेन दुरितं घ्नन्निवर्तयन् । तथा च स्मर्यते—'अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः । दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यशः ॥' इति । तत्त्वस्य वस्तुतत्त्वस्यार्थेन समर्थनेन प्रकाशनेन च तमोऽज्ञानं ध्वान्तं च नुदञ्शश्वत्प्रजाः स्वतन्त्रयांचक्रे स्वाधीनाश्चकार ॥

इन्दोरगतयः[4] पद्मे सूर्यस्य कुमुदेंऽशवः ।
गुणास्तस्य विपक्षेऽपि गुणिनो लेभिरेऽन्तरम् ॥ ७५ ॥

इन्दोरिति ॥ इन्दोरंशवः पद्मेऽगतयः । प्रवेशरहिता इत्यर्थः । सूर्यस्यांशवः कुमुदेऽगतयः । गुणिनस्तस्य गुणास्तु विपक्षे शत्रावप्यन्तरमवकाशं लेभिरे प्रापुः ॥

पराभिसंधानपरं यद्यप्यस्य[5] विचेष्टितम् ।
जिगीषोरश्वमेधाय[6] धर्म्यमेव[7] बभूव तत् ॥ ७६ ॥

परेति ॥ अश्वमेधाय जिगीषोरस्य विचेष्टितं दिग्विजयरूपं यद्यपि पराभिसंधानपरं शत्रुवञ्चनप्रधानं तथापि तद्धर्म्यं धर्मादनपेतमेव । 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । बभूव । 'मन्त्रप्रभावोत्साहशक्तिभिः परान्संदध्यात्' इति कौटिल्यः ॥

एवमुद्यन्प्रभावेण शास्त्रनिर्दिष्टवर्त्मना ।
वृषेव देवो देवानां राज्ञां[8] राजा बभूव सः ॥ ७७ ॥

एवमिति ॥ एवं शास्त्रनिर्दिष्टवर्त्मना शास्त्रोपदिष्टमार्गेण प्रभावेण कोशदण्डजेन तेजसा । 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इत्यमरः । उद्यन्नुद्युञ्जानः सः । वृषा वासवो देवानां देवो देवदेव इव । राज्ञां राजा राजराजो बभूव ॥

पञ्चमं लोकपालानामूचुः[9] साधर्म्ययोगतः ।
भूतानां महतां षष्ठमष्टमं कुलभूभृताम् ॥ ७८ ॥

पञ्चम इति ॥ तम् । राजानमिति शेषः । साधर्म्ययोगतो यथाक्रमं लोकसंरक्षणपरोपकारभूधारणरूपसमानधर्मत्वबलाल्लोकपालानामिन्द्रादीनां चतुर्णां पञ्चममूचुः । महतां भूतानां पृथिव्यादीनां पञ्चानां षष्ठमूचुः । कुलभूभृतां कुलाचलानां महेन्द्रमलयादीनां सप्तानामष्टममूचुः ॥

---

१ दर्शने निघ्नन्. २ स पालयांचक्रे; स रञ्जयांचक्रे; वितमसश्चक्रे. ३ न ययौ ताविव क्षयम्; न ययौ तावदक्षयम्. ४ गमस्तयः. ५ यदपि. ६ अश्वमेधार्थम्. ७ धर्माय. ८ राजा राज्ञाम्. ९ तमूचुः

दूरापवर्जितच्छत्रैस्तस्याज्ञां शासनार्पिताम् ।
दधुः शिरोभिर्भूपाला देवाः पौरंदरीमिव ॥ ७९ ॥

दूरेति ॥ भूपालाः शासनेषु पत्रेष्वर्पितामुपन्यस्तां तस्य राज्ञ आज्ञाम् । देवाः पौरंदरीमैन्द्रीमाज्ञामिव । दूरापवर्जितच्छत्रैर्दूरात्परिहृतातपत्रैः शिरोभिर्दधुः ॥

ऋत्विजः स तथानर्च दक्षिणाभिर्महाक्रतौ ।
यथा साधारणीभूतं नामास्य धनदस्य च ॥ ८० ॥

ऋत्विज इति ॥ स राजा महाक्रतावश्वमेधेऽर्त्विजो याजकान्दक्षिणाभिस्तथानर्चार्चयामास । अर्चतेर्भौवादिकाल्लिट् । यथास्य राज्ञो धनदस्य च नाम साधारणीभूतमेकीभूतम् । उभयोरपि धनदसंज्ञा यथा स्यात्तथेत्यर्थः ॥

इन्द्राद्वृष्टिर्नियमितगदोद्रेकवृत्तिर्यमोऽभू-
द्यादोनाथः शिवजलपथः कर्मणे नौचराणाम् ।
पूर्वापेक्षी तदनु विदधे कोषवृद्धिं कुबेर-
स्तस्मिन्दण्डोपनतचरितं भेजिरे लोकपालाः ॥ ८१ ॥

इन्द्रादिति ॥ इन्द्राद्वृष्टिरभूत् । यमो नियमिता निवारिता गदस्य रोगस्योद्रेक एव वृत्तिर्येन सोऽभूत् । यादोनाथो वरुणो नौचराणां नाविकानां कर्मणे संचाराय शिवजलपथः सुचरजलमार्गोऽभूत् । तदनु पूर्वापेक्षी रघुरामादिमहिमाभिज्ञः कुबेरः कोषवृद्धिं विदधे । इत्थं लोकपालास्तस्मिन्राज्ञि विषये दण्डोपनतस्य शरणागतस्य चरितं वृत्तिं भेजिरे । 'दुर्बलो बलवत्सेवी विरुद्धाच्छङ्कितादिभिः । वर्तेत दण्डोपनतो भर्तर्येवमवस्थितः' इति कौटिल्यः ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये अतिथिवर्णनो नाम सप्तदशः सर्गः ।

---

१ नेपथ्य

# अष्टादशः सर्गः ।

यत्पादपांसुसंपर्कादहल्यासीदपांसुला ।
कारुण्यसिन्धवे तस्मै नमो वैदेहिबन्धवे ॥

स नैषधस्यार्थपतेः सु[1]तायामुत्पादयामास निषिद्धशत्रुः ।
अनूनसारं निषधान्नगेन्द्रात्पुत्रं यमाहुर्निषधाख्यमेव ॥ १ ॥

**स इति** ॥ निषिद्धशत्रुर्निवारितरिपुः सोऽतिथिर्नैषधस्य निषधदेशाधीश्वरस्यार्थपते राज्ञः सुतायां निषधान्निषधाख्यान्नगेन्द्रात्पर्वतादनूनसारमन्यूनबलं पुत्रमुत्पादयामास । यं पुत्रं निषधाख्यं निषधनामकमेवाहुः ॥

तेनोरु[2]वीर्येण पिता प्रजायै कल्पिष्यमाणेन ननन्द यूना ।
सुवृष्टियोगादिव जीवलोकः सस्येन संप[3]त्तिफलोन्मुखेन ॥ २ ॥

**तेनेति** ॥ उरुवीर्येणातिपराक्रमेणात एव प्रजायै लोकरक्षणार्थं कल्पिष्यमाणेन तेन यूना निषधेन पितातिथिः । सुवृष्टियोगात्संपत्तिफलोन्मुखेन पाकोन्मुखेन सस्येन जीवलोक इव । ननन्द जहर्ष ॥

शब्दादि निर्विश्य सुखं चिराय तस्मिन्प्रतिष्ठापितराजशब्दः ।
कौमुद्वतेयः कुमुदावदातैर्द्यामर्जितां कर्मभिरारुरोह ॥ ३ ॥

**शब्दादीति** ॥ कुमुद्वत्या अपत्यं पुमान्कौमुद्वतेयोऽतिथिः शब्दादि शब्दस्पर्शादि सुखं सुखसाधनं विषयवर्गं निर्विश्योपभुज्य चिराय तस्मिन्निषधाख्ये पुत्रे प्रतिष्ठापितराजशब्दो दत्तराज्यः सन् । कुमुदावदातैर्निर्मलैः कर्मभिरश्वमेधादिभिरर्जितां संपादितां द्यां स्वर्गमारुरोह ॥

पौत्रः कुशस्यापि कुशेशयाक्षः ससागरां सागरधीरचेताः ।
एकातपत्रां भुवमेकवीरः पुरार्गलादीर्घभुजो बुभोज ॥ ४ ॥

**पौत्र इति** ॥ कुशेशयाक्षः शतपत्रलोचनः । 'शतपत्रं कुशेशयम्' इत्यमरः । सागरधीरचेताः समुद्रगम्भीरचित्त एकवीरोऽसहायशूरः पुरस्यार्गला कपाटविष्कम्भः । 'तद्विष्कम्भोऽर्गलं न ना' इत्यमरः । तद्वद्दीर्घभुजः कुशस्य पौत्रो निषधोऽपि ससागरामेकातपत्रां भुवं बुभोज पालयामास । 'भुजोऽनवने' इत्युक्तेः परस्मैपदम् ॥

तस्यानलौजास्तनयस्तदन्ते वंशश्रियं प्राप नलाभिधानः।
यो नड्वलानीव गजः परेषां बलान्यमृद्नान्नलिनाभवक्त्रः ॥ ५ ॥

तस्येति ॥ अनलौजा नलाभिधानो नलाख्यस्तस्य निषधस्य तनयस्तस्य निषधस्यान्तेऽवसाने वंशश्रियं राज्यलक्ष्मीं प्राप । नलिनाभवक्त्रो यो नलः । गजो नड्वलानि नडप्रायस्थलानीव । 'नडशादाड्ड्वलच्' इति ड्वलच्प्रत्ययः । परेषां बलान्यमृद्नान्ममर्द ॥

नभश्चरैर्गीतयशाः स लेभे नभस्तलश्यामतनुं तनूजम् ।
ख्यातं नभःशब्दमयेन नाम्ना कान्तं नभोमासमिव प्रजानाम्

नभ इति ॥ नभश्चरैर्गन्धर्वादिभिर्गीतयशाः स नलो नभस्तलश्यामतनुं नभःशब्दमयेन नाम्ना ख्यातम् । नभःशब्दसंज्ञकमित्यर्थः । नभोमासमिव श्रावणमासमिव । प्रजानां कान्तं प्रियं तनूजं पुत्रं लेभे ॥

तस्मै[1] विसृज्योत्तरकोसलानां धर्मोत्तरस्तत्प्रभवे[2] प्रभुत्वम् ॥ ६ ॥
मृगैरजर्यं[3] जरसोपदिष्टमदेहबन्धाय पुनर्[4]बबन्ध ॥ ७ ॥

तस्मा इति ॥ धर्मोत्तरो धर्मप्रधानः स नलः प्रभवे समर्थाय तस्मै नभसे तदुत्तरकोसलानां प्रभुत्वमाधिपत्यं विसृज्य दत्त्वा जरसा जरयोपदिष्टम् । वार्धके चिकीर्षितमित्यर्थः । मृगैरजर्यं तैः सह संगतम् । 'अजर्यं संगतम्' इति निपातः । पुनरदेहबन्धाय पुनर्देहसंबन्धनिवृत्तये बबन्ध । मोक्षार्थं वनं गत इत्यर्थः । अदेहबन्धायेत्यत्र प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते ॥

तेन द्विपानामिव पुण्डरीको राज्ञामजय्योऽजनि पुण्डरीकः ।
शान्ते पितर्याहृतपुण्डरीका[5] यं पुण्डरीकाक्षमिव श्रिता श्रीः ॥८॥

तेनेति ॥ तेन नभसा । द्विपानां पुण्डरीको दिग्गजविशेष इव । राज्ञामजय्यो जेतुमशक्यः । 'क्षय्यजय्यौ शक्यार्थे' इति निपातनात्साधुः । पुण्डरीकः पुण्डरीकाख्यः पुत्रोऽजनि जनितः । पितरि शान्ते स्वर्गते सति । आहृतपुण्डरीका गृहीतश्वेतपद्मा श्रीर्यं पुण्डरीकं पुण्डरीकाख्यं विष्णुमिव श्रिता ॥

स क्षेमधन्वानममोघधन्वा पुत्रं प्रजाक्षेमविधानदक्षम्[7] ।
क्ष्मां लम्भयित्वा क्षमयोपपन्नं वने तपः क्षान्ततर[8]श्चचार ॥ ९ ॥

स इति ॥ अमोघं धनुर्यस्य सोऽमोघधन्वा । 'धनुषश्च' इत्यनङादेशः स-

१ तस्मिन्. २ तत्प्रभवः; स प्रभवः; तत्प्रसवः. ३ अजर्यं. ४ मनः. ५ आहितपु-

मासान्तः । स पुण्डरीकः प्रजाना क्षेमविधाने दक्षं क्षमयोपपन्नं क्षान्तियुक्तं क्षेमं धनुर्यस्य तं क्षेमधन्वानं नाम पुत्रम् । 'वा संज्ञायाम्' इत्यनङादेशः क्ष्मां लम्भयित्वा प्रापय्य । लभेर्गत्यर्थत्वाद्द्विकर्मकत्वम् । क्षान्ततरोऽत्यन्तसहिष्णुः सन्वने तपश्चचार ॥

अनीकिनीनां समरेऽग्रयायी तस्यापि देवप्रतिमः सुतोऽभूत् ।
व्यश्रूयतानीकपदावसानं देवादि नाम त्रिदिवेऽपि यस्य ॥ १० ॥

अनीकिनीनामिति ॥ तस्य क्षेमधन्वनोऽपि समरेऽनीकिनीनां चमूनामग्रयायी देवप्रतिम इन्द्रादिकल्पः सुतोऽभूत् । अनीकपदावसानमनीकशब्दान्तं देवादि देवशब्दपूर्वं यस्य नाम देवानीक इति नामधेयं त्रिदिवे स्वर्गेऽपि व्यश्रूयत विश्रुतम् ॥

पिता समाराधनतत्परेण पुत्रेण पुत्री स यथैव तेन ।
पुत्रस्तथैवात्मजवत्सलेन स तेन पित्रा पितृमान्बभूव ॥ ११ ॥

पितेति ॥ स पिता क्षेमधन्वा समाराधनतत्परेण शुश्रूषापरेण तेन पुत्रेण यथैव पुत्री बभूव तथैव स पुत्रो देवानीक आत्मजवत्सलेन तेन पित्रा पितृमान्बभूव । लोके पितृत्वपुत्रत्वयोः फलमनयोरेवासीदित्यर्थः ॥

पूर्वस्तयोरात्मसमे चिरोढामात्मोद्भवे वर्णचतुष्टयस्य ।
धुरं निधायैकनिधिर्गुणानां जगाम यज्वा यजमानलोकम् ॥ १२ ॥

पूर्व इति ॥ गुणानामेकनिधिर्यज्वा विधिवदिष्टवांस्तयोः पितृपुत्रयोर्मध्ये पूर्वः पिता क्षेमधन्वात्मसमे स्वतुल्य आत्मोद्भवे पुत्रे देवानीके चिरोढां चिरधृतां वर्णचतुष्टयस्य धुरं रक्षाभारं निधाय यजमानलोकं यष्टृलोकं नाकं जगाम ॥

वशी सुतस्तस्य वशंवदत्वात्स्वेषामिवासीद्द्विषतामपीष्टः ।
सकृद्विविग्नानपि हि प्रयुक्तं माधुर्यमीष्टे हरिणान्ग्रहीतुम् ॥ १३ ॥

वशीति ॥ तस्य देवानीकस्य वशी समर्थः सुतोऽहीनगुर्नामेति वक्ष्यमाणनामकः । वशं वशकरं मधुरं वदतीति वशंवदः । 'प्रियवशे वदः खच्' इति खच्प्रत्ययः । तस्य भावस्तत्त्वम् । तस्मादिष्टवादित्वात्स्वेषामिव द्विषतामपीष्टः प्रिय आसीत् । अर्थादेवानीकनिर्धारणं लभ्यते । तथाहि । प्रयुक्तमुच्चारितं माधुर्यं सकृदेकवारं विविग्नान्भीतानपि हरिणान्ग्रहीतुं वशीकर्तुमीष्टे शक्नोति ॥

अहीनगुर्नाम स गां समग्रामहीनबाहुद्रविणः शशास ।
यो हीनसंसर्गपराङ्मुखत्वाद्युवाप्यनर्थैर्व्यसनैर्विहीनः ॥ १४ ॥

अहीनगुरिति ॥ अहीनबाहुद्रविणः समग्रभुजपराक्रमः। 'द्रविणं काञ्चनं वित्तं द्रविणं च पराक्रमः' इति विश्वः। हीनसंसर्गपराङ्मुखत्वान्नीचसंसर्गविमुखत्वाद्धेतोर्युवाप्यनर्थैरनर्थकैर्व्यसनैः पानद्यूतादिभिर्विहीनो रहितो योऽहीनगुर्नाम स पूर्वोक्तो देवानीकसुतः समग्रां सर्वां गां भुवं शशास ॥

गुरोः स चानन्तरमन्तरज्ञः पुंसां पुमानाद्य इवावतीर्णः।
उपक्रमैरस्खलितैश्चतुर्भिश्चतुर्दिगीशश्चतुरो बभूव ॥ १५ ॥

गुरोरिति॥ पुंसामन्तरज्ञो विशेषज्ञश्चतुरो निपुणः सोऽहीनगुश्च गुरोः पितुरनन्तरम्। अवतीर्णो भुवं प्राप्त आद्यः पुमान्विष्णुरिव। अस्खलितैरप्रतिहतैश्चतुर्भिरुपक्रमैः सामाद्युपायैः। 'सामादिभिरुपक्रमैः' इति मनुः। चतुर्दिगीशश्चतसृणां दिशामीशो बभूव॥

तस्मिन्प्रयाते परलोकयात्रां जेतर्यरीणां तनयं तदीयम्।
उच्चैःशिरस्त्वाज्जितपारियात्रं लक्ष्मीः सिषेवे किल पारियात्रम्॥१६॥

तस्मिन्निति ॥ अरीणां जेतरि तस्मिन्नहीनगौ परलोकयात्रां प्रयाते प्राप्ते सति। उच्चैःशिरस्त्वादुन्नतशिरस्कत्वाज्जितः परियात्रः कुलशैलविशेषो येन तं पारियात्रं पारियात्राख्यं तदीयं तनयं लक्ष्मी राज्यलक्ष्मीः सिषेवे किल ॥

तस्याभवत्सूनुरुदारशीलः शिलः[1] शिलापट्ट[2]विशालवक्षाः।
जितारिपक्षोऽपि शिलीमुखैर्यः शालीनतामव्रजदीड्यमानः ॥१७॥

तस्येति ॥ तस्य पारियात्रस्योदारशीलो महावृत्तः। 'शीलं स्वभावे सद्वृत्ते' इत्यमरः। शिलापट्टविशालवक्षाः शिलः शिलाख्यः सूनुरभवत्। यः सूनुः शिलीमुखैर्बाणैः। 'अलिबाणौ शिलीमुखौ' इत्यमरः। जितारिपक्षोऽपीड्यमानः स्तूयमानः सन्। शालीनतामधृष्टतां लज्जामव्रजदगच्छत्। 'स्यादधृष्टे तु शालीनः' इत्यमरः। 'शालीनकौपीने अधृष्टाकार्ययोः' इति निपातः ॥

तमात्मसंपन्नमनिन्दितात्मा कृत्वा युवानं युवराजमेव।
सुखानि सोऽभुङ्क्त सुखोपरोधि वृत्तं[3] हि राज्ञामुपरुद्धवृत्तम्[4] ॥ १८ ॥

तमिति ॥ अनिन्दितात्मागर्हितस्वभावः स पारियात्र आत्मसंपन्नं बुद्धिसंपन्नम्। 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्युभयत्राप्यमरः। युवानं तं शिलं

---

१ शीलः. २ शिलापाट. ३ वार्तम्. ४ वृत्ति.

१६–१७ श्लोकयोर्मध्ये क्षेपकोऽयं दृश्यते—

[illegible] दयान्वितः पद्मदलाक्षदृष्टिः।

युवराजं कृत्वैव सुखान्यभुङ्क्त । न त्वकृत्वेत्येवकारार्थः । किमर्थं युवराजशब्दकरणमित्याशङ्क्यान्यथा सुखोपभोगो दुर्लभ इत्याह—सुखोपरोधीति । हि यस्माद्राज्ञां वृत्तं प्रजापालनादिरूपं सुखोपरोधि बहुलत्वात्सुखप्रतिबन्धकम् । अतएवोपरुद्धवृत्तम् । कारादिबद्धसदृशमित्यर्थः । उपरुद्धस्य स्वयमूढभारस्य च सुखं नास्तीति भावः ॥

तं रागबन्धिष्ववितृप्तमेव भोगेषु सौभाग्यविशेषभोग्यम् ।
विलासिनीनामरतिक्षमापि जरा वृथा मत्सरिणी जहार ॥ १९ ॥

तमिति ॥ रागं बध्नन्तीति रागबन्धिनः । रागप्रवर्तका इत्यर्थः । तेषु भोगेषु विषयेष्ववितृप्तमेव सन्तं किंच विलासिनीनां भोक्त्रीणां सौभाग्यविशेषेण सौन्दर्यातिशयेन हेतुना भोग्यं भोगार्हम् । 'चजोः कु घिण्यतोः' इति कुत्वम् । तं पारियात्रं रतिक्षमा न भवतीत्यरतिक्षमापि । अतएव वृथा मत्सरिणी रतिक्षमासु । विलासिनीष्वित्यर्थः । जरा जहार वशीचकार ॥

उन्नाभ इत्युद्गतनामधेयस्तस्यायथार्थोन्नतनाभिरन्ध्रः ।
सुतो[1]ऽभवत्पङ्कजनाभकल्पः[2] कृत्स्नस्य नाभिर्नृपमण्डलस्य ॥ २० ॥

उन्नाभ इति ॥ तस्य शिलाख्यस्योन्नाभ इत्युद्गतनामधेयः प्रसिद्धनामा यथार्थं यथा तथोन्नतं नाभिरन्ध्रं यस्य सः । गम्भीरनाभिरित्यर्थः । तदुक्तम्—'स्वरः सत्त्वं च नाभिश्च गाम्भीर्यं त्रिषु शस्यते' । पङ्कजनाभकल्पो विष्णुसदृशः कृत्स्नस्य नृपमण्डलस्य नाभिः प्रधानम् । 'नाभिः प्रधाने कस्तूरीमदेऽपि क्वचिदीरितः' इति विश्वः । सुतोऽभवत् । 'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' इत्यत्राजिति योगविभागादुन्नाभपद्मनाभादयः सिद्धाः ॥

ततः परं वज्रधरप्रभावस्तदात्मजः[3] संयति वज्रघोषः ।
बभूव वज्राकरभूषणायाः[4] पतिः पृथिव्याः किल वज्रणाभः[5] ॥ २१ ॥

तत इति ॥ ततः परं वज्रधरप्रभाव इन्द्रतेजाः संयति सङ्ग्रामे वज्रघोषोऽशनितुल्यध्वनिर्वज्रणाभो नाम तस्योन्नाभस्यात्मजो वज्राणां हीरकाणामाकराः खनय एव भूषणानि यस्यास्तस्याः पृथिव्याः पतिर्बभूव किल खलु 'वज्रं त्वस्त्री कुलीशशस्त्रयोः । मणिवेधे रत्नभेदेऽप्यशनावासनान्तरे' इति केशवः ॥

---

१ आसीत्सुतः. २ तुल्यः. ३ तस्यात्मजः. ४ मेखलायाः. ५ वज्रनाभः; वज्रनामा.

१९–

तस्मिन्गते द्यां[1] सुकृतोपलब्धां[2] तत्संभवं शङ्खण[3]मर्णवान्ता ।
उत्खातशत्रुं वसुधोपतस्थे रत्नोपहारै[4]रुदितैः खनिभ्यः ॥ २२ ॥

तस्मिन्निति ॥ तस्मिन्वज्रणाभे सुकृतोपलब्धां सुधर्मार्जितां द्यां स्वर्गं गते सति । उत्खातशत्रुमुद्धृतशत्रुं शङ्खणं नाम तत्संभवं तदात्मजमर्णवान्ता वसुधा खनिभ्य आकरेभ्य उदितैरुत्पन्नै रत्नोपहारैरुत्कृष्टवस्तुसमर्पणैरुपतस्थे सिषेवे । 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इति भरतविश्वौ ॥

तस्यावसाने हरिदश्वधामा[5] पित्र्यं प्रपेदे पदम[6]श्विरूपः ।
वेलातटेषूषितसैनिकाश्वं पुराविदो यं [7]व्युषिताश्वमाहुः ॥ २३ ॥

तस्येति ॥ तस्य शङ्खणस्यावसानेऽन्ते हरिदश्वधामा सूर्यतेजाः । अश्विनोरिव रूपमस्येत्यश्विरूपोऽतिसुन्दरः । तत्पुत्र इति शेषः । पित्र्यमिति संबन्धिपदसामर्थ्यात् । पित्र्यं पदं प्रपेदे । वेलातटेषूषिता निविष्टाः सैनिका अश्वाश्च यस्य तम् । अन्वर्थनामानमित्यर्थः । यं पुत्रं पुराविदो वृद्धा व्युषिताश्वमाहुः ॥

आराध्य विश्वेश्वरमीश्वरेण तेन क्षितेर्वि[8]श्वसहो विजज्ञे[9] ।
पातुं सहो विश्वं[10]सखः समग्रां विश्वंभरामात्मजमूर्तिरात्मा ॥ २४ ॥

आराध्येति ॥ तेन क्षितेरीश्वरेण व्युषिताश्वेन विश्वेश्वरं काशीपतिमाराध्योपास्य विश्वसहो नाम विश्वसखः समग्रां सर्वां विश्वंभरां भुवं पातुं रक्षितुं सहत इति सहः क्षमः । पचाद्यच् । आत्मजमूर्तिः पुत्ररूप्यात्मा स्वयमेव । 'आत्मा वै पुत्रनामासि' इति श्रुतेः । विजज्ञे सुषुवे । विपूर्वो जनिर्गर्भविमोचने वर्तते । यथाह भगवान्पाणिनिः—'समां समां विजायते' इति ॥

अंशे हिरण्याक्षरिपोः स[11] जाते हिरण्यनाभे तनये नयज्ञः ।
द्विषामसह्यः सुतरां तरूणां हिरण्यरेता इव सानिलोऽभूत् ॥ २५ ॥

अंश इति ॥ नयज्ञो नीतिज्ञः स विश्वसहः । हिरण्याक्षरिपोर्विष्णोरंशे हिरण्यनाभे नाम्नि तनये जाते सति । तरूणां सानिलो हिरण्यरेता हुतभुगिव । द्विषां सुतरामसह्योऽभूत् ॥

पिता पितॄणामनृणस्तमन्ते वयस्यनन्तानि सुखानि लिप्सुः ।
राजानमाजानुविलम्बिबाहुं कृत्वा कृती वल्कलवान्बभूव ॥ २६ ॥

पितेति ॥ पितॄणामनृणः । निवृत्तपितृऋण इत्यर्थः । 'प्रजया पितृभ्यः' इति

१ स्वः. २ सुकृतोपलब्धम्. ३ खण्डनम्; षण्डनम्. ४ खनितैः. ५ हरिदश्वनामा. ६ अश्वरूपः.

ुतेः । अत एव कृती । कृतकृत्य इत्यर्थः । पिता विश्वसहोऽन्ते वयसि वार्धकेऽन-
तान्यविनाशानि सुखानि लिप्सुः । मुमुक्षुरित्यर्थः । आजानुविलम्बिबाहुं दीर्घबा-
ुम् । भाग्यसंपन्नमिति भावः । तं हिरण्यनाभं राजानं कृत्वा वल्कलवान्बभूव । वनं
त इत्यर्थः ॥

कौसल्य इत्युत्तरकोसलानां पत्युः पतङ्गान्वयभूषणस्य ।
तस्यौरसः सोमसुतः सुतोऽभून्नेत्रोत्सवः सोम इव द्वितीयः ॥२७॥

कौसल्य इति ॥ उत्तरकोसलानां पत्युः पतङ्गान्वयभूषणस्य सूर्यवंशाभरणस्य
ोमसुतः सोमं सुतवतः । यज्वन इत्यर्थः । 'सोमे सुञः' इति क्विप् । तस्य हिरण्य-
ाभस्य । द्वितीयः सोमश्चन्द्र इव । नेत्रोत्सवो नयनानन्दकरः कौसल्य इति प्रसिद्ध
ौरसो धर्मपत्नीजः सुतोऽभूत् ॥

यशोभिराब्रह्मसभं[1] प्रकाशः स ब्रह्मभूयं गतिमाजगाम ।
ब्रह्मिष्ठमाधाय निजेऽधिकारे ब्रह्मिष्ठमेव स्वतनुप्रसूतम् ॥ २८ ॥

यशोभिरिति ॥ आ ब्रह्मसभाया आब्रह्मसभं ब्रह्मसदनपर्यन्तम् । अभिवि-
ावव्ययीभावः । यशोभिः प्रकाशः प्रसिद्धः स कौसल्योऽतिशयेन ब्रह्मवन्तं ब्रह्मि-
म् । ब्रह्मविदमित्यर्थः । ब्रह्मशब्दान्मतुबन्तादिष्ठन्प्रत्यये 'विन्मतोर्लुक्' इति मतुपो
ुक् । 'नस्तद्धिते' इति टिलोपः । ब्रह्मिष्ठं ब्रह्मिष्ठाख्यं स्वतनुप्रसूतं स्वात्मजमेव निजे
वकीयेऽधिकारे प्रजापालनकृत्य आधाय निधाय । ब्रह्मणो भावो ब्रह्मभूयं ब्रह्मत्वं
देव गतिस्तामाजगाम । मुक्तोऽभूदित्यर्थः । 'स्याद्ब्रह्मभूयं ब्रह्मत्वम्' इत्यमरः ।
ुवो भावे क्यप् ॥

तस्मिन्कुलापीडनिभे विपीडं[2] सम्यग्महीं शासति शासनाङ्काम्[3] ।
प्रजाश्चिरं सुप्रजसि प्रजेशे ननन्दुरानन्दजलाविलाक्ष्यः[4] ॥ २९ ॥

तस्मिन्निति ॥ कुलापीडनिभे कुलशेखरतुल्ये । 'वैकक्षकं तु तत् । यत्तिर्यक्क्षि-
ुरसि शिखास्वापीडशेखरौ' इत्यमरः । सुप्रजसि सत्संतानवति । 'नित्यमसिच्प्र-
ामेधयोः' इत्यसिच्प्रत्ययः । तस्मिन्प्रजेशे प्रजेश्वरे ब्रह्मिष्ठे शासनाङ्कां शासनचिह्नां
हीं विपीडं निर्बाधं यथा तथा सम्यक्शासति सति । आनन्दजलाविलाक्ष्य आन-
दबाष्पाकुलनेत्राः प्रजाश्चिरं ननन्दुः ॥

पात्रीकृतात्मा गुरुसेवनेन स्पष्टाकृतिः पत्ररथेन्द्रकेतोः ।
तं पुत्रिणां पुष्करपत्रनेत्रः पुत्रः समारोपयदग्रसंख्याम् ॥ ३० ॥

---

१ ब्रह्मभूयाम. २ विपीडाम. ३ शासनाङ्कम. ४ आनन्दजलाकुलाक्ष्यः; आनन्दजलोक्षिताक्ष्यः.

पात्रीकृतेति ॥ गुरुसेवनेन पित्रादिशुश्रूषया पात्रीकृतात्मा योग्यीकृतात्मा। 'योग्यभाजनयोः पात्रम्' इत्यमरः। पत्त्ररथेन्द्रकेतोर्गरुडध्वजस्य स्पष्टाकृतिः स्पष्टवपुः। तत्सरूप इत्यर्थः। 'आकृतिः कथिता रूपे सामान्यवपुषोरपि' इति विश्वः। पुष्कर-पत्त्रनेत्रः पद्मदलाक्षः पुत्रः पुत्राख्यो राजा। यद्वा पुत्रशब्द आवर्तनीयः। पुत्रः पुत्राख्यः पुत्रः सुतः। तं ब्रह्मिष्ठं पुत्रिणामग्रसंख्यां समारोपयत्। अग्रगण्यं चकारेत्यर्थः॥

वंशस्थितिं वंश[1]करेण तेन संभाव्य भावी स सखा मघोनः।
[2]उपस्पृशन्स्पर्शनिवृत्तलौल्यस्[3]त्रिपुष्करेषु त्रिदशत्वमाप ॥ ३१ ॥

वंशेति ॥ स्पृश्यन्त इति स्पर्शा विषयाः। तेभ्यो निवृत्तलौल्यो निवृत्ततृष्णः। अतएव मघोन इन्द्रस्य सखा मित्रं भावी भविष्यन्। स्वर्गं जिगमिषुरित्यर्थः। स ब्रह्मिष्ठो वंशकरेण वंशप्रवर्तकेन तेन पुत्रेण वंशस्थितिं कुलप्रतिष्ठां संभाव्य संपाद्य त्रिषु पुष्करेषु तीर्थविशेषेषु। 'दिक्संख्ये संज्ञायाम्' इति समासः। उपस्पृशन्स्नानं कुर्वंस्त्रिदशत्वं देवभूयमाप ॥

तस्य प्रभानिर्जित[4]पुष्परागं पौ[5]ष्यां तिथौ [6]पुष्यमसूत पत्नी।
तस्मिन्नपुष्यन्नुदिते समग्रां पुष्टिं जनाः पुष्य इव द्वितीये॥ ३२॥

तस्येति ॥ तस्य पुत्राख्यस्य पत्नी पौष्यां पुष्यनक्षत्रयुक्तायां पौर्णमास्यां तिथौ। 'पुष्ययुक्ता पौर्णमासी पौषी' इत्यमरः। 'नक्षत्रेण युक्तः कालः' इत्यण्प्रत्ययः। 'टिड्ढाणञ्–' इत्यादिना ङीप्। प्रभया निर्जितः पुष्परागो मणिविशेषो येन तं पुष्यं पुष्याख्यमसूत। द्वितीये पुष्ये पुष्यनक्षत्र इव तस्मिन्नुदिते सति जनाः समग्रां पुष्टिं वृद्धिमपुष्यन् ॥

महीं महेच्छः परिकीर्य सूनौ मनीषिणे जैमिनयेऽर्पितात्मा।
तस्मात्सयोगादधिगम्य योगमजन्मनेऽकल्पत जन्मभीरुः ॥३३॥

महीमिति ॥ महेच्छो महाशयः। 'महेच्छस्तु महाशयः' इत्यमरः। जन्मभीरुः संसारभीरुः स पुत्रः सूनौ महीं परिकीर्य विसृज्य मनीषिणे ब्रह्मविद्याविदुषे जैमिनये मुनयेऽर्पितात्मा। शिष्यभूतः सन्नित्यर्थः। सयोगाद्योगिनस्तस्माज्जैमिनेर्योगं योगविद्यामधिगम्याजन्मने जन्मनिवृत्तये मोक्षायाकल्पत समपद्यत। कपेः संपद्यमाने चतुर्थी वक्तव्या। मुक्त इत्यर्थः ॥

---

१ वंशधरेण. २ अपस्प्रशनः अपः स्पृशन्. ३ त्रिषु शान्तिम्. ४ पद्मरागम्. ५ पुष्याम्. ६ पुष्पम्.

ततः परं तत्प्रभवः[1] प्रपेदे ध्रुवोपमेयो[2] ध्रुवसंधिरुर्वीम्[3][4] ।
यस्मिन्नभूज्ज्यायसि सत्यसंधे[5] संधिर्ध्रुवः संनमतामरीणाम्[6] ॥ ३४ ॥

तत इति ॥ ततः परं स पुष्यः प्रभवः कारणं यस्य स तत्प्रभवः । तदात्मज इत्यर्थः । ध्रुवेणौत्तानपादिनोपमेयः । 'ध्रुव औत्तानपादिः स्यात्' इत्यमरः । ध्रुवसंधिरुर्वीं प्रपेदे । ज्यायसि श्रेष्ठे सत्यसंधे सत्यप्रतिज्ञे यस्मिन्ध्रुवसंधौ संनमताम् । अनुद्धतानामित्यर्थः । अरीणां संधिर्ध्रुवः स्थिरोऽभूत् । ततः सार्थकनामेत्यर्थः ॥

सुते शिशावेव सुदर्शनाख्ये दर्शात्ययेन्दुप्रियदर्शने सः ।
मृगायताक्षो मृगयाविहारी सिंहादवापद्विपदं नृसिंहः[7] ॥ ३५ ॥

सुत इति ॥ मृगायताक्षो नृसिंहः पुरुषश्रेष्ठः स ध्रुवसंधिर्दर्शात्ययेन्दुप्रियदर्शने प्रतिपच्चन्द्रनिभे सुदर्शनाख्ये सुते शिशौ सत्येव मृगयाविहारी सन्सिंहाद्विपदं मरणमवापत् । व्यसनासक्तिरनर्थावहेति भावः ॥

स्वर्गामिनस्तस्य तमैकमत्यादमात्यवर्गः कुलतन्तुमेकम् ।
अनाथदीनाः प्रकृतीरवेक्ष्य साकेतनाथं विधिवच्चकार ॥ ३६ ॥

स्वरिति ॥ स्वर्गामिनः स्वर्यातस्य तस्य ध्रुवसंधेरमात्यवर्गः । अनाथा नाथहीना अत एव दीनाः शोच्याः प्रकृतीः प्रजा अवेक्ष्य । कुलतन्तुं कुलावलम्बनमेकमद्वितीयं तं सुदर्शनमैकमत्याद्विधिवत्साकेतनाथमयोध्याधीश्वरं चकार ॥

नवेन्दुना तन्नभसोपमेयं शावैकसिंहेन च काननेन ।
रघोः कुलं कुड्मलपुष्करेण तोयेन चाप्रौढनरेन्द्रमासीत् ॥ ३७ ॥

नवेति ॥ अप्रौढनरेन्द्रं तद्रघोः कुलं नवेन्दुना बालचन्द्रेण नभसा व्योम्ना । शावः शिशुरेकः सिंहो यस्मिन् । 'पृथुकः शावकः शिशुः' इत्यमरः । तेन काननेन च । कुड्मलं कुड्मलावस्थं पुष्करं पङ्कजं यस्मिंस्तेन तोयेन चोपमेयमुपमातुमर्हमासीत् । नवेन्द्वाद्युपमानेन तस्य वर्धिष्णुताशौर्यश्रीमत्त्वानि सूचितानि ॥

लोकेन भावी पितुरेव तुल्यः संभावितो मौलिपरिग्रहात्सः ।
दृष्टो हि वृण्वन्कलभप्रमाणोऽप्याशाः पुरोवातमवाप्य मेघः ॥ ३८ ॥

लोकेनेति ॥ स बालो मौलिपरिग्रहात्किरीटस्वीकाराद्धेतोः पितुस्तुल्यः पितृसरूप एव भावी भविष्यति लोकेन जनेन संभावितस्तर्कितः । तथाहि । कलभप्रमाणः कलभमात्रोऽपि मेघः पुरोवातमवाप्याशा दिशो वृण्वन्नाच्छन्दृष्टो हि ॥

---

१ तत्प्रभवम्. २ ध्रुवोपमेयम्. ३ ध्रुवसंधिम्. ४ उर्वी. ५ सत्यसंधिः. ६ नृपाणाम्. ७ नृसोमः.

तं राजवीथ्यामधिहस्ति यान्तमाधोरणालम्बितमग्र्यवेशम् ।
षड्वर्षदेशीयमपि प्रभुत्वात्प्रैक्षन्त पौराः पितृगौरवेण ॥ ३९ ॥

तमिति ॥ राजवीथ्यां राजमार्गेऽधिहस्ति हस्तिनि । विभक्त्यर्थेऽव्ययीभावः । यान्तं गच्छन्तम् । हस्तिनमारुह्य गच्छन्तमित्यर्थः । आधोरणालम्बितं शिशुत्वात्सादिना गृहीतमग्र्यवेशमुदारनेपथ्यं षड्वर्षाणि भूतः षड्वर्षः । 'तद्धितार्थ—' इत्यादिना समासः । 'तमधीष्टो भृतो भूतो भावी' इत्यधिकारे 'चित्तवति नित्यम्' इति तद्धितस्य लुक् । ईषदसमाप्तः षड्वर्षः षड्वर्षदेशीयः । 'ईषदसमाप्तौ—' इत्यादिना देशीयर्प्रत्ययः । तं षड्वर्षदेशीयमपि बालमपि तं सुदर्शनं पौराः प्रभुत्वात्पितृगौरवेण प्रैक्षन्त । पितरि यादृग्गौरवं तादृशेनैव ददृशुरित्यर्थः ॥

कामं न सोऽकल्पत पैतृकस्य सिंहासनस्य प्रतिपूरणाय ।
तेजोमहिम्ना पुनरावृतात्मा तद्व्याप चामीकरपिञ्जरेण ॥ ४० ॥

काममिति ॥ स सुदर्शनः पैतृकस्य सिंहासनस्य कामं सम्यक्प्रतिपूरणाय नाकल्पत । बालत्वाद्व्याप्तुं न पर्याप्त इत्यर्थः । चामीकरपिञ्जरेण कनकगौरेण तेजोमहिम्ना पुनस्तेजःसंपदा त्वावृतात्मा विस्तारितदेहः संस्तत्सिंहासनं व्याप व्याप्तवान् ॥

तस्मादधः किंचिदिवावतीर्णावसंस्पृशन्तौ तपनीयपीठम् ।
सालक्तकौ भूपतयः प्रसिद्धैर्ववन्दिरे मौलिभिरस्य पादौ ॥ ४१ ॥

तस्मादिति ॥ तस्मात्सिंहासनादपादानादधोऽधोदेशं प्रति किंचिदिवावतीर्णावीषल्लम्बौ तपनीयपीठं काञ्चनपीठमसंस्पृशन्तावल्पकत्वादव्याप्तौ सालक्तकौ लाक्षारसावसिक्तावस्य सुदर्शनस्य पादौ भूपतयः प्रसिद्धैरुन्नतैर्मौलिभिर्मुकुटैर्ववन्दिरे प्रणेमुः ॥

मणौ महानील इति प्रभावादल्पप्रमाणेऽपि यथा न मिथ्या ।
शब्दो महाराज इति प्रतीतस्तथैव तस्मिन्युयुजेऽर्भकेऽपि ॥४२॥

मणाविति ॥ अल्पप्रमाणेऽपि मणाविन्द्रनीले प्रभावात्तेजिष्ठत्वाद्धेतोर्महानील इति शब्दो यथा मिथ्या निरर्थको न तथैवार्भके शिशावपि तस्मिन्सुदर्शने प्रतीतः प्रसिद्धो महाराज इति शब्दो न मिथ्या युयुजे ॥

पर्यन्तसंचारितचामरस्य कपोललोलोभयकाकपक्षात् ।
तस्याननादुच्चरितो विवादश्चस्खाल वेलास्वपि नार्णवानाम् ४३

पर्यन्तेति ॥ पर्यन्तयोः पार्श्वयोः संचारिते चामरे यस्य तस्य तस्य बालस्य सं-

१ यन्तम्. २ पूर्वकायम्; मध्यदेशम्. ३ आवितानम्; आ वितानात्. ४ सकुङ्कुमौ. ५ प्रयुक्तः; प्र-

बन्धिनः कपोलयोर्लोलावुभौ काकपक्षौ यस्य तस्मादाननादुच्चरितो विवादो वचनमर्णवानां वेलास्वपि न चस्खाल। शिशोरपि तस्याज्ञाभङ्गो नासीदित्यर्थः। चपलसंसर्गेऽपि महान्तो न चलन्तीति ध्वनिः। उभयकाकपक्षादित्यत्र—'वृत्तिविषये उभयपुत्र इतिवदुभशब्दस्थान उभयशब्दप्रयोगः' इत्युक्तं प्राक्॥

निर्वृत्त[1]जाम्बूनदपट्टशोभे न्यस्तं ललाटे तिलकं दधानः।
तेनैव शून्यान्यरिसुन्दरीणां मुखानि स स्मेरमुखश्चकार॥४४॥

निर्वृत्तेति॥ निर्वृत्ता जाम्बूनदपट्टशोभा यस्य तस्मिन्कृतकनकपट्टशोभे ललाटे न्यस्तं तिलकं दधानः स्मेरमुखः स्मितमुखः स राजारिसुन्दरीणां मुखानि तेनैव तिलकेनैव शून्यानि चकार। अखिलमपि शत्रुवर्गमवधीदिति भावः॥

शि[2]रीषपुष्पाधिकसौकुमार्यः खेदं स यायाद[3]पि भूषणेन।
नितान्तगुर्वीमपि सो[4]ऽनुभावाद्धुरं धरित्र्या बिभ[5]रांबभूव॥४५॥

शिरीषेति॥ शिरीषपुष्पाधिकसौकुमार्यः। कोमलाङ्ग इत्यर्थः। अतएव स राजा भूषणेनापि खेदं श्रमं यायाद्गच्छेत्। एवंभूतः स नितान्तगुर्वीमपि धरित्र्या धुरं भुवो भारमनुभावात्सामर्थ्याद्बिभरांबभूव बभार। 'भीह्रीभृहुवां श्लुवच्च' इति विकल्पादाम्प्रत्ययः॥

न्यस्ताक्षरामक्षरभूमिकायां कार्त्स्न्येन गृह्णाति लिपिं न यावत्।
स[6]र्वाणि तावच्छ्रुतवृद्धयोगा[7]त्फ[8]लान्युपायुङ्क्त स दण्डनीतेः॥४६॥

न्यस्तेति॥ अक्षरभूमिकायामक्षरलेखनस्थले न्यस्ताक्षरां रचिताक्षरपङ्क्तिरेखान्यासां लिपिं पञ्चाशद्वर्णात्मिकां मातृकां कार्त्स्न्येन यावन्न गृह्णाति स सुदर्शनस्तावच्छ्रुतवृद्धयोगाद्विद्यावृद्धसंसर्गात्सर्वाणि दण्डनीतेर्दण्डशास्त्रस्य फलान्युपायुङ्क्तान्वभूत्। प्रागेव बद्धफलस्य तस्य पश्चादभ्यस्यमानं शास्त्रं संवादार्थमिवाभवदित्यर्थः॥

उरस्यपर्याप्तनिवेशभागा प्रौढीभविष्यन्त[9]मुदीक्षमाणा।
संजातलज्जेव तमातपत्रच्छायाछलेनोपजुगूह लक्ष्मीः॥४७॥

उरसीति॥ उरस्यपर्याप्तो निवेशभागो निवासावकाशो यस्याः सा। अतएव प्रौढीभविष्यन्तं वर्धिष्यमाणमुदीक्षमाणा प्रौढवपुष्मान्भविष्यतीति प्रतीक्षमाणा लक्ष्मीः संजातलज्जेव साक्षादालिङ्गितुं लज्जितेव तं सुदर्शनमातपत्रच्छायाछलेनोप-

१ निर्वृत्तजाम्बूनदपट्टबन्धे; निवृत्तजाम्बूनदपट्टबन्धे. २ शिरीषपुष्पोपम. ३ अथ. ४ च. ५ बिभरांचकार. ६ तावत्क्षितीशः; तावत्फलानि. ७ वृद्धानि; पक्वानि. ८ भागम; भोगात्. ९ उदीक्षमाणम्;

जुगूहालिलिङ्ग। छत्रच्छाया लक्ष्मीरूपेति प्रसिद्धिः। प्रौढाङ्गनायाः प्रौढपुरुषालाभे लज्जा भवतीति ध्वनिः॥

अनश्नुवानेन युगोपमानमबद्धमौर्वीकिणलाञ्छनेन।
अस्पृष्टखङ्गत्सरुणापि चासीद्रक्षावती तस्य भुजेन भूमिः॥४८॥

अनश्नुवानेनेति॥ युगोपमानं युगसादृश्यमनश्नुवानेनाप्राप्नुवता। अबद्धं मौर्वीकिणो ज्याघातग्रन्थिरेव लाञ्छनं यस्य तेन। अस्पृष्टः खङ्गत्सरुः खङ्गमुष्टिर्येन तेन। 'त्सरुः खङ्गादिमुष्टौ स्यात्' इत्यमरः। एवंविधेनापि च तस्य सुदर्शनस्य भुजेन भूमी रक्षावत्यासीत्। शिशोरपि तस्य तेजस्तादृगित्यर्थः॥

न केवलं गच्छति तस्य काले ययुः शरीरावयवा विवृद्धिम्।
वंश्या गुणाः खल्वपि लोककान्ताः प्रारम्भसूक्ष्माः प्रतिमानमापुः ४९

नेति॥ काले गच्छति सति तस्य केवलं शरीरावयवा एव विवृद्धिं प्रसारं न ययुः। किं तु वंशे भवा वंश्या लोककान्ता जनप्रियाः प्रारम्भ आदौ सूक्ष्मास्तस्य गुणाः शौर्यौदार्यादयोऽपि प्रथिमानं पृथुत्वमापुः खलु॥

स पूर्वजन्मान्तरदृष्टपाराः स्मरन्निवाक्लेशकरो गुरूणाम्।
तिस्रस्त्रिवर्गाधिगमस्य मूलं जग्राह विद्याः प्रकृतीश्च पित्र्याः ५०

स इति॥ स सुदर्शनः पूर्वस्मिञ्जन्मान्तरे जन्मविशेषे दृष्टपाराः स्मरन्निव गुरूणामक्लेशकरः सन्। त्रयाणां धर्मार्थकामानां वर्गस्त्रिवर्गः। तस्याधिगमस्य प्राप्तेर्मूलं तिस्रो विद्यास्त्रयीवार्तादण्डनीतीः पित्र्याः पितृसंबन्धिनीः प्रकृतीः प्रजाश्च जग्राह स्वायत्तीचकार। अत्र कौटिल्यः—'धर्माधर्मौ त्रय्यामर्थानर्थौ वार्तायां नयानयौ दण्डनीत्याम्' इति। अत्र दण्डनीतिर्नयद्वारा काममूलमिति द्रष्टव्यम्। आन्वीक्षिक्या अनुपादानं त्रय्यन्तर्भावपक्षमाश्रित्य। यथाह कामन्दकः—'त्रयी वार्ता दण्डनीतिस्तिस्रो विद्या मनोर्मताः। त्रय्या एव विभागोऽयं येन सान्वीक्षिकी मता॥' इति॥

[2]व्यूह्य स्थितः किंचिदिवो[3]त्तरार्धमुन्नद्धचूडोऽञ्चितसव्यजानुः।
आकर्णमाकृष्टसबाणधन्वा व्यरोचता[4]स्त्रेषु विनीयमानः॥ ५१॥

व्यूह्येति॥ अस्त्रेषु धनुर्विद्यायां विनीयमानः शिक्ष्यमाणोऽत एवोत्तरार्धं पूर्वकायं किंचिदिव व्यूह्य विस्तार्य स्थितः। उन्नद्धचूडमूर्ध्वमुत्कृष्य बद्धकेशः। अञ्चितमाकुञ्चितं सव्यं जानु यस्य स आकर्णमाकृष्टं सबाणं धनुर्धन्व वा येन स तथोक्तः सन्व्यरोचताशोभत॥

अथ मधु वनितानां नेत्र[1]निर्वेशनीयं
मनसिजतरुपुष्पं [2]रागबन्धप्रवालम् ।
अकृतकविधि सर्वाङ्गीणमाकल्पजातं
विलसितपदमाद्यं यौवनं स प्रपेदे ॥ ५२ ॥

**अथेति** ॥ अथ स सुदर्शनो वनितानां नेत्रैर्निर्वेशनीयं भोग्यम् । नेत्रपेयमित्यर्थः। निर्वेशो भृतिभोगयोः' इत्यमरः । मधु क्षौद्रम् । रागबन्धोऽनुरागसंतान एव प्रवालः पल्लवो यस्य तत् । मनसिज एव तरुस्तस्य पुष्पं पुष्पभूतम् । अकृतकविध्यकृत्रिमसंपादनम् । सर्वाङ्गं व्याप्नोतीति सर्वाङ्गीणम् । 'तत्सर्वादेः—' इत्यादिना खप्रत्ययः । आकल्पजातमाभरणसमूहभूतम् । आद्यं विलसितपदं विलासस्थानं यौवनं प्रपेदे । विशिष्टमधुपुष्पाकल्पजातविलासपदत्वेन यौवनस्य चतुर्धाकरणात्सविशेषणमालारूपकमेतत् ॥

प्रतिकृतिरचनाभ्यो [3]दूतिसंदर्शिताभ्यः
समधिकतररूपाः शुद्धसंतानकामैः ।
अधिविविदुरमात्यैराहृतास्तस्य यूनः
प्रथमपरिगृहीते श्रीभुवौ राजकन्याः ॥ ५३ ॥

**प्रतिकृतीति** ॥ दूतिभिः कन्यापरीक्षणार्थं प्रेषिताभिः संदर्शिताभ्यो दूतिसंदर्शिताभ्यः प्रतिकृतीनां तूलिकादिलिखितकन्याप्रतिमानां रचनाभ्यो विन्यासेभ्यः । 'पञ्चमी विभक्ते' इति पञ्चमी । समधिकतररूपाः । चित्रनिर्माणादपि रमणीयनिर्माणा इत्यर्थः । शुद्धसंतानकामैरमात्यैराहृता आनीता राजकन्या यूनस्तस्य सुदर्शनस्य संबन्धिन्यौ प्रथमपरिगृहीते श्रीभुवौ श्रीश्च भूश्च ते अधिविविदुरधिविन्ने चक्रुः । आत्मना सपत्नीभावं चक्रुरित्यर्थः । 'कृतसापत्निकाध्यूढाधिविन्ना' इत्यमरः ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया
व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये
वंशानुक्रमो नामाष्टादशः सर्गः ।

---

# एकोनविंशः सर्गः

मनसो मम संसारबन्धमुच्छेत्तुमिच्छतः ।
रामचन्द्रपदाम्भोजयुगुलं निबिडायताम् ॥

**अग्निवर्णमभिषिच्य राघवः स्वे पदे तनयमग्नितेजसम् ।**
**शिश्रिये श्रुतवतामपश्चिमः पश्चिमे वयसि नैमिषं वशी ॥ १ ॥**

अग्निवर्णमिति ॥ श्रुतवतां श्रुतसंपन्नानामपश्चिमः प्रथमो वशी जितेन्द्रियो राघवः सुदर्शनः पश्चिमे वयसि वार्धके स्वे पदे स्थानेऽग्नितेजसं तनयमग्निवर्णमभिषिच्य नैमिषं नैमिषारण्यं शिश्रिये श्रितवान् ॥

**तत्र तीर्थसलिलेन दीर्घिकास्तल्पमन्तरितभूमिभिः कुशैः ।**
**सौधवासमुटजेन विस्मृतः संचिकाय फलनिःस्पृहस्तपः ॥ २ ॥**

तत्रेति ॥ तत्र नैमिषे तीर्थसलिलेन दीर्घिका विहारवापीरन्तरितभूमिभिः कुशैस्तल्पं शय्यामुटजेन पर्णशालया सौधवासं विस्मृतो विस्मृतवान्सः । कर्तरि क्तः । फले स्वर्गादिफले निःस्पृहस्तपः संचिकाय संचितवान् ॥

**लब्धपालनविधौ न तत्सुतः खेदमाप गुरुणा हि मेदिनी ।**
**भोक्तुमेव भुजनिर्जितद्विषा न प्रसाधयितुमस्य कल्पिता ॥ ३ ॥**

लब्धेति ॥ तत्सुतः सुदर्शनपुत्रोऽग्निवर्णो लब्धपालनविधौ लब्धस्य राज्यस्य पालनकर्मणि खेदं नाप । अक्लेशेनापालयदित्यर्थः । कुतः । हि यस्माद्भुजनिर्जितद्विषा गुरुणा पित्रा मेदिन्यस्याग्निवर्णस्य भोक्तुमेव कल्पिता । प्रसाधयितुं न । प्रसाधनं कण्टकशोधनम् । अलंकृतिर्ध्वन्यते । तथा च । यथालंकृता युवतिः केवलमुपभुज्यते तद्वदिति भावः ॥

**सोऽधिकारमभिकः कुलोचितं काश्चन स्वयमवर्तयत्समाः ।**
**संनिवेश्य सचिवेष्वतःपरं स्त्रीविधेयनवयौवनोऽभवत् ॥ ४ ॥**

स इति ॥ अभिकः कामुकः । 'अनुकाभिकाभीकः कमिता' इति निपातः । 'कम्रः कामयिताभीकः कमनः कामनोऽभिकः' इत्यमरः । सोऽग्निवर्णः कुलोचितमधिकारं प्रजापालनं काश्चन समाः कतिचिद्वत्सरान्स्वयमवर्तयदकरोत् । अतःपरं सचिवेषु संनिवेश्य निधाय स्त्रीविधेयं स्त्र्यधीनं नवं यौवनं यस्य सोऽभवत् । स्त्र्यासक्तोऽभूदित्यर्थः ॥

कामिनीसहचरस्य कामिनस्तस्य वेश्मसु मृदङ्गनादिषु ।
ऋद्धिमन्तमधिकर्द्धिरुत्तरः पूर्वमुत्सवमपोहदुत्सवः ॥ ५ ॥

कामिनीति ॥ कामिनीसहचरस्य कामिनस्तस्य मृदङ्गनादिषु मृदङ्गनादवत्सु वेश्म-
त्रधिकर्द्धिः पूर्वस्मादधिकसंभारः उत्तर उत्सवः । ऋद्धिमन्तं साधनसंपन्नं पूर्वमुत्स-
मपोहदपानुदत् । उत्तरमुत्तरमधिका तस्योत्सवपरम्परा वृत्तेत्यर्थः ॥

इन्द्रियार्थपरिशून्यमक्षमः सोढुमेकमपि स क्षणान्तरम् ।
अन्तरेव विहरन्दिवानिशं न व्यपैक्षत समुत्सुकाः प्रजाः ॥ ६ ॥

इन्द्रियेति ॥ इन्द्रियार्थपरिशून्यं शब्दादिविषयरहितमेकमपि क्षणान्तरं क्षणभेदं
ोढुमक्षमोऽशक्तः सोऽग्निवर्णो दिवानिशमन्तरेव विहरन्समुत्सुका दर्शनाकाङ्क्षिणीः
जा न व्यपैक्षत नापेक्षितवान् ॥

गौरवाद्यदपि जातु मन्त्रिणां दर्शनं प्रकृतिकाङ्क्षितं ददौ ।
तद्गवाक्षविवरावलम्बिना केवलेन चरणेन कल्पितम् ॥ ७ ॥

गौरवादिति ॥ जातु कदाचिन्मन्त्रिणां गौरवाद्गुरुत्वाद्धेतोः । मन्त्रिवचनानुरोधा-
ेत्यर्थः । प्रकृतिभिः प्रजाभिः काङ्क्षितं यदपि दर्शनं ददौ तदपि गवाक्षविवरावलम्बि-
ा केवलेन चरणेन चरणमात्रेण कल्पितं संपादितम् । न तु मुखावलोकनप्रदाने-
त्यर्थः ॥

तं कृतप्रणतयोऽनुजीविनः कोमलात्मनखरागरूषितम् ।
भेजिरे नवदिवाकरातपस्पृष्टपङ्कजतुलाधिरोहणम् ॥ ८ ॥

तमिति ॥ कोमलेन मृदुलेनात्मनखानां रागेणारुण्येन रूषितं छुरितम् । अतएव न-
वदिवाकरातपेन स्पृष्टं व्याप्तं यत्पङ्कजं तस्य तुलां साम्यतामधिरोहति प्राप्नोतीति तु-
लाधिरोहणम् । तं चरणमनुजीविनः कृतप्रणतयः कृतनमस्काराः सन्तो भेजिरे सिषे-
विरे ॥

यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाश्च दीर्घिकाः ।
गूढमोहनगृहास्तदम्बुभिः स व्यगाहत विगाढमन्मथः ॥ ९ ॥

यौवनेति ॥ विगाढमन्मथः प्रौढमदनः सोऽग्निवर्णो यौवनेन हेतुनोन्नतानां वि-
लासिनीस्तनानां क्षोभेणाघातेन लोलानि चञ्चलानि कमलानि यासां ताः । तदम्बु-
भिस्तासां दीर्घिकाणामम्बुभिर्गूढान्यन्तरितानि मोहनगृहाणि सुरतभवनानि यासु
ताश्च दीर्घिका व्यगाहत । स्त्रीभिः सह दीर्घिकासु विजहारेत्यर्थः ॥

तत्र सेकहृतलोचनाञ्जनैर्धौतरागपरिपाटलाधरैः ।
अङ्गनास्तमधिकं व्यलोभयन्नर्पितप्रकृतकान्तिभिर्मुखैः ॥ १० ॥

तत्रेति ॥ तत्र दीर्घिकास्वङ्गनाः सेकेन हृतं लोचनाञ्जनं नेत्रकज्जलं येषां तैः । रज्यतेऽनेनेति रागो रागद्रव्यं लाक्षादि । रागस्य परिपाटलोऽङ्गगुणः । 'गुणे शुक्लादयः पुंसि' इत्यमरः । धौतो रागपरिपाटलो येषां ते तथोक्ता अधरा येषां तैः । निवृत्तसांक्रमिकरागैरित्यर्थः । अतएवार्पितप्रकृतकान्तिभिः । अभिव्यञ्जितस्वाभाविकरागैरित्यर्थः । एवंभूतैर्मुखैस्तमग्निवर्णमधिकं व्यलोभयन्प्रलोभितवत्यः ॥

घ्राणकान्तमधुगन्धकर्षिणीः पानभूमिरचनाः प्रियासखः ।
अभ्यपद्यत स वासितासखः पुष्पिताः कमलिनीरिव द्विपः॥११॥

घ्राणेति ॥ प्रियासखः सोऽग्निवर्णो घ्राणकान्तेन घ्राणतर्पणेन मधुगन्धेन कर्षिणीर्मनोहारिणीः । रच्यन्त इति रचनाः । पानभूमय एव रचनाः । रचिता पानभूमय इत्यर्थः । वासितासखः करिणीसहचरः । 'वासिता स्त्रीकरिण्योश्च' इत्यमरः । द्विपः पुष्पिताः कमलिनीरिव । अभ्यपद्यताभिगतः ॥

सातिरेकमदकारणं रहस्तेन दत्तमभिलेषुरङ्गनाः ।
ताभिरप्युपहृतं मुखासवं सोऽपिबद्बकुलतुल्यदोहदः ॥ १२ ॥

सातिरेकेति ॥ अङ्गना रहो रहसि सातिरेकस्य सातिशयस्य मदस्य कारणं तेनाग्निवर्णेन दत्तं मुखासवमभिलेषुः । बकुलेन तुल्यदोहदस्तुल्याभिलाषः । 'अथ दोहदम् । इच्छाकाङ्क्षा स्पृहेहा तृट्' इत्यमरः । बकुलद्रुमस्याङ्गनामद्यार्थित्वात्तुल्याभिलाषत्वम् । सोऽपि ताभिरङ्गनाभिरुपहृतं दत्तं मुखासवमपिबत् ॥

अङ्कमङ्कपरिवर्तनोचिते तस्य निन्यतुरशून्यतामुभे ।
वल्लकी च हृदयंगमस्वना वल्गुवागपि च वामलोचना ॥ १३ ॥

अङ्कमिति ॥ अङ्कपरिवर्तनोचिते उत्सङ्गविहारार्हे उभे तस्याग्निवर्णस्याङ्कमशून्यतां पूर्णतां निन्यतुः । के उभे । हृदयंगमस्वना मनोहरध्वनिर्वल्लकी वीणा च । वल्गुवाङ्मधुरभाषिणि वामलोचना कामिन्यपि च । हृदयं गच्छतीति हृदयंगमः । खच्प्रकरणे गमेः सुप्युपसंख्यानात्खच्प्रत्ययः । अङ्काधिरोपितयोर्वीणावामाक्ष्योर्वाद्यगीताभ्यामरंस्तेत्यर्थः ॥

---

१ लोचनाञ्जनम्. २ व्यलम्भयन्. ३ प्रकृति. ४ वर्षिणीः; वाहिनीः. ५ प्रियाव्रतः.

स स्वयं प्रहतपुष्करः कृती लोलमाल्यवलयो हरन्मनः ।
नर्तकीरभिनयातिलङ्घिनीः पार्श्ववर्तिषु गुरुष्वलज्जयत् ॥ १४ ॥

स इति ॥ कृती कुशलः स्वयं प्रहतपुष्करो वादितवाद्यमुखो लोलानि माल्यानि
लयानि च यस्य स तथोक्तो मनो हरन् । नर्तकीनामिति शेषः । सोऽग्निवर्णोऽभि-
यातिलङ्घिनीः । अभिनयेषु स्खलन्तीरित्यर्थः । नर्तकीर्विलासिनीः । 'शिल्पिनि
वुन्' इति ष्वुन्प्रत्ययः । 'पिद्गौरादिभ्यश्च' इति ङीष् । 'नर्तकीलासिके समे' इत्यमरः ।
रुषु नाट्याचार्येषु पार्श्ववर्तिषु समीपस्थेषु सत्स्वेवालज्जयल्लज्जामगमयत् ॥

चारु नृत्यविगमे च तन्मुखं स्वेदभिन्नतिलकं परिश्रमात् ।
प्रेमदत्तवदनानिलः पिबन्नत्यजीवदमरालकेश्वरौ ॥ १५ ॥

चार्विति ॥ किंच चारु सुन्दरं नृत्यविगमे लास्यावसाने परिश्रमान्नर्तनप्रयासा-
स्वेदेन भिन्नतिलकं विशीर्णतिलकं तन्मुखं नर्तकीमुखं प्रेम्णा दत्तवदनानिलः प्रवर्ति-
मुखमारुतः पिबन् । अमराणामलकायाश्चेश्वराविन्द्रकुबेरावत्यजीवदतिक्रम्याजीवत् ।
तोऽप्युत्कृष्टजीवित आसीदित्यर्थः । इन्द्रादेरपि दुर्लभमीदृशं सौभाग्यमिति भावः ॥

तस्य सावरणदृष्टसंधयः काम्यवस्तुषु नवेषु सङ्गिनः ।
वल्लभाभिरुपसृत्य चक्रिरे सामिभुक्तविषयाः समागमाः ॥ १६ ॥

तस्येति ॥ उपसृत्यान्यत्र गत्वा नवेषु नूतनेषु काम्यवस्तुषु शब्दादिष्विन्द्रियार्थे-
षु सङ्गिन आसक्तिमतः सतस्तस्य सावरणाः प्रच्छन्ना दृष्टाः प्रकाशाश्च संधयः साध-
नानि येषु ते समागमाः संगमा वल्लभाभिः प्रेयसीभिः सामिभुक्तविषया अर्धोपभुक्ते-
न्द्रियार्थाश्चक्रिरे । यथेष्टं भुक्तश्चेत्तर्ह्ययं निस्पृहः सन्नस्मत्समीपं नायास्यतीति भावः ।
अत्र गोनर्दीयः—'संधिर्द्विविधः । सावरणः प्रकाशश्च । सावरणो भिक्षुक्यादिना प्रका-
शः स्वयमुपेत्य केनापि' इति । 'इतः स्वयमुपसृत्य विशेषार्थं तत्र स्थितोऽनुपजापं स्वयं
संधेयः' इति वात्स्यायनः । अन्यत्र गतं कथंचित्संधाय पुनरनुपगमयार्धोपभोगेनानि-
वृत्ततृष्णं चक्रुरित्यर्थः ॥

अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितम् ।
मेखलाभिरसकृच्च बन्धनं वञ्चयन्प्रणयिनीरवाप सः ॥ १७ ॥

अङ्गुलीति ॥ सोऽग्निवर्णः प्रणयिनीः प्रेयसीर्वञ्चयन्नन्यत्र गच्छन्नङ्गुल्यः किस-

लयानि तेषामग्राणि तैस्तर्जनं भर्त्सनं भ्रूविभङ्गेन भ्रूभेदेन कुटिलं वक्रं वीक्षितं वीक्षणं चासक्तन्मेखलाभिर्बन्धनं चावाप । अपराधिनो दण्ड्या इति भावः ॥

तेन दूतिविदितं निषेदुषा पृष्ठतः सुरतवाररात्रिषु ।
शुश्रुवे प्रियजनस्य कातरं विप्रलम्भपरिशङ्किनो वचः ॥ १८ ॥

तेनेति ॥ सुरतस्य वारो वासरः । तस्य रात्रिषु दूतीनां विदितं यथा तथा पृष्ठतः प्रियजनस्य पश्चाद्भागे निषेदुषा तेनाग्निवर्णेन विप्रलम्भपरिशङ्किनो विरहशङ्किनः । प्रियश्चासौ जनश्च प्रियजनः । तस्य कातरं वचः प्रियानयनेन मां पाहीत्येवमादि दीनवचनं शुश्रुवे ॥

लौल्यमेत्य गृहिणीपरिग्रहान्नर्तकीष्वसुलभासु तद्वपुः ।
वर्तते स्म स कथंचिदालिखन्नङ्गुलीक्षरणसन्नवर्तिकः ॥ १९ ॥

लौल्यमिति ॥ गृहिणीपरिग्रहाद्राज्ञीभिः समागमाद्धेतोर्नर्तकीषु वेश्यास्वसुलभासु दुर्लभासु सतीषु लौल्यमौत्सुक्यमेत्य प्राप्य । अङ्गुल्योः क्षरणेन स्वेदनेन सन्नवर्तिको विगलितशलाकः सोऽग्निवर्णस्तासां नर्तकीनां वपुस्तद्वपुरालिखन्कथंचिद्वर्तते स्मावर्तत ॥

प्रेमगर्वितविपक्षमत्सरादायताच्च मदनान्महीक्षितम् ।
निन्युरुत्सवविधिच्छलेन तं देव्य उज्झितरुषः कृतार्थताम् ॥ २० ॥

प्रेमेति ॥ प्रेम्णा स्वविषयेण प्रियस्यानुरागेण हेतुना गर्विते विपक्षे सपत्नजने मत्सराद्वैरादायतात्प्रवृद्धान्मदनाच्च हेतोर्देव्यो राज्य उज्झितरुषस्त्यक्तरोषाः सत्यस्तं महीक्षितमुत्सवविधिच्छलेन महोत्सवकर्मव्याजेन । कृतोऽर्थःप्रयोजनं येन स कृतार्थः तस्य भावस्तत्तां निन्युः । मदनमहोत्सवव्याजान्नीतेन तेन स्वमनोरथं कारयामासुरित्यर्थः ॥

प्रातरेत्य परिभोगशोभिना दर्शनेन कृतखण्डनव्यथाः ।
प्राञ्जलिः प्रणयिनीः प्रसादयन्सोऽदुनोत्प्रणयमन्थरः पुनः ॥ २१ ॥

प्रातरिति ॥ सोऽग्निवर्णः प्रातरेत्यागत्य परिभोगशोभिना दर्शनेन हेतुना । दृशेर्ण्यन्ताल्ल्युट् । कृता खण्डनव्यथा यासां तास्तथोक्ताः । खण्डिता इत्यर्थः । तदुक्तम्—'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति । प्रणयिनीः प्राञ्जलिः प्रसादयंस्तथापि प्रणयमन्थरः प्रणयेन नर्तकीगतेन मन्थरोऽलसः । अत्र शिथिलप्रयत्नः सन्नित्यर्थः । पुनरदुनोत्पर्यतापयत् ॥

स्वप्नकीर्तितविपक्षमङ्गनाः प्रत्यभैत्सुरवदन्त्य एव तम् ।
प्रच्छदान्तगलिताश्रुबिन्दुभिः क्रोधभिन्नवलयैर्विवर्तनैः ॥ २२ ॥

स्वप्नेति ॥ स्वप्ने कीर्तितो विपक्षः सपत्नजनो येन तं तमग्निवर्णम् । अवदन्त्य एव । या गोत्रस्खलनं कृतमित्यनुपालम्भमाना एव । प्रच्छदस्यास्तरणपटस्यान्ते मध्ये लिता अश्रुबिन्दवो येषु तैः क्रोधेन भिन्नानि भग्नानि वलयानि येषु तैर्विवर्तनैः पाग्विलम्बनैः प्रत्यभैत्सुः प्रतिचक्रुः । तिरश्चक्रुरित्यर्थः ॥

क्लृप्तपुष्पशयनाँल्लताग्रहानेत्य दूतिकृतमार्गदर्शनः ।
अन्वभूत्परिजनाङ्गनारतं सोऽवरोधभयवेपथूत्तरम् ॥ २३ ॥

क्लृप्तेति ॥ सोऽग्निवर्णो दूतिभिः कृतमार्गदर्शनः सन् । क्लृप्तपुष्पशयनाँल्लतागृहात्यावरोधादन्तःपुरजनाद्भयेन यो वेपथुः कम्पस्तदुत्तरं तत्प्रधानं यथा तथा परिनाङ्गनारतं दासीरतमन्वभूत् । परिजनश्चासावङ्गना चेति विग्रहः । अत्र ङीबन्तयापि दूतीशब्दस्य छन्दोभङ्गभयाद्ध्रस्वत्वं कृतम् । 'अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद्गिराम्' इत्युपदेशात् ॥

नाम वल्लभजनस्य ते मया प्राप्य भाग्यमपि तस्य काङ्क्ष्यते ।
लोलुपं ननु मनो ममेति तं गोत्रविस्खलितमूचुरङ्गनाः ॥ २४ ॥

नामेति ॥ मया ते वल्लभजनस्य प्रियजनस्य नाम प्राप्य तन्नाम्नाह्वानं लब्ध्वा तय त्वद्वल्लभजनस्य यद्भाग्यम् । तत्परिहासकारणमिति शेषः । तदपि काङ्क्ष्यते । ानु बत मम मनो लोलुपं गृध्नु । इत्यनेन प्रकारेण गोत्रे नाम्नि विस्खलितं स्खलितन्तं तमग्निवर्णमूचुः । 'गोत्रं नाम्नि कुलेऽचले' इति यादवः । तन्नामलाभे सति द्भाग्यमपि काङ्क्षिणो मनः । अहो तृष्णेति सोल्लुण्ठमुपालम्भन्तेत्यर्थः ॥

चूर्णबभ्रु लुलितस्रगाकुलं छिन्नमेखलमलक्तकाङ्कितम् ।
उत्थितस्य शयनं विलासिनस्तस्य विभ्रमरतान्यपावृणोत् ॥ २५ ॥

चूर्णेति ॥ चूर्णबभ्रु चूर्णैर्व्यानतकरणैरधोमुखावस्थितायाः स्त्रियाश्चिकुरगलितैः कुङ्कुमादिभिर्बभ्रु पिङ्गलम् । 'बभ्रु स्यात्पिङ्गले त्रिषु' इत्यमरः । लुलितस्रगाकुलं करिपदाख्यबन्धे स्त्रिया भूमिगतमस्तकतया पतिताभिर्लुलितस्रग्भिराकुलम् । छिन्नमेखलं हरिविक्रमकरणैः स्त्रिया उच्छ्रितैकचरणत्वाद्गलितमेखलम् । अलक्तकाङ्कितं धेनुकबन्धे भूतलनिहितकान्ताचरणत्वाल्लाक्षारागरूषितं शयनं कर्तृ उत्थितस्य । शयनादिति भावः । विलासिनस्तस्याग्निवर्णस्य विभ्रमरतानि लीलारतानि । सुरतबन्धविशेषानित्यर्थः । अपावृणोत्स्फुटीचकार । व्यानतादीनां लक्षणं रति-

रहस्ये—'व्यानतं रतमिदं प्रिया यदि स्यादधोमुखचतुष्पदाकृतिः । तत्कटिं समधिरुह्य वल्लभः स्याद्वृषादिपशुसंस्थितस्थितिः । भूगतस्तनभुजास्यमस्तकामुन्नतस्फिचमधोमुखीं स्त्रियम् । क्रामति स्वकरकृष्टमेहने वल्लभे करिपदं तदुच्यते । योषिदेकचरणे समुत्थिते जायते हि हरिविक्रमाह्वयः । न्यस्तहस्तयुगला निजे पदे योषिदेति कटिरूढवल्लभा । अग्रतो यदि शनैरधोमुखी धेनुकं वृषवदुन्नते प्रिये ॥' इति ॥

स स्वयं चरणरागमादधे योषितां न[1] च तथा समाहितः[2] ।
लोभ्यमाननयनः श्लथांशुकैर्मेखलागुणपदैर्नितम्बिभिः ॥ २६ ॥

स इति ॥ सोऽग्निवर्णः स्वयमेव योषितां चरणयो रागं लाक्षारसमादधेऽर्पयामास । किंच । श्लथांशुकैः । प्रियाङ्गस्पर्शादिति भावः । नितम्बिभिर्नितम्बवद्भिर्मेखलागुणपदैर्जघनैः । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः । लोभ्यमाननयन आकृष्यमाणदृष्टिः सन् । तथा समाहितोऽवहितो नादधे यथासम्यग्रागरचना स्यादिति भावः ॥

चुम्बने[3] विपरिवर्तिताधरं हस्तरोधि रशनाविघट्टने ।
विघ्नितेच्छमपि तस्य सर्वतो[4] मन्मथेन्धनमभूद्वधूरतम् ॥ २७ ॥

चुम्बन इति ॥ चुम्बने प्रवृत्ते सति विपरिवर्तिताधरं परिहृतोष्ठम् । रशनाविघट्टने ग्रन्थिविस्रंसने प्रसक्ते सति हस्तं रुणद्धि वारयतीति हस्तरोधि । इत्थं सर्वतः सर्वत्र विघ्नितेच्छं प्रतिहतमनोरथमपि वधूनां रतं सुरतं तस्याग्निवर्णस्य मन्मथेन्धनं कामोद्दीपनमभूत् ॥

दर्पणेषु परिभोगदर्शिनीर्नर्मपूर्वमनुपृष्ठसंस्थितः[5] ।
छायया स्मितमनोज्ञया वधूर्ह्रीनिमीलितमुखीश्चकार[6] सः ॥२८॥

दर्पणेष्विति ॥ सोऽग्निवर्णो दर्पणेषु परिभोगदर्शिनीः संभोगचिह्नानि पश्यन्तीर्वधूर्नर्मपूर्वं परिहासपूर्वमनुपृष्ठं तासां पृष्ठभागे संस्थितः सन् । स्मितेन मनोज्ञया छायया दर्पणगतेन स्वप्रतिबिम्बेन ह्रीनिमीलितमुखीर्लज्जावनतमुखीश्चकार । तमागतं दृष्ट्वा लज्जिता इत्यर्थः ॥

कण्ठसक्तमृदुबाहुबन्धनं न्यस्तपादतलमग्रपादयोः ।
प्रार्थयन्त शयनोत्थितं प्रियास्तं निशात्ययविसर्गचुम्बनम्[7] ॥२९॥

कण्ठेति ॥ प्रियाः शयनादुत्थितं तमग्निवर्णं कण्ठसक्तं कण्ठार्पितं मृदुबाहुबन्धनं

---

१ न तु; तु न; ननु. २ समाहितम्. ३ चुम्बने च परिवर्तिताधरम्; चुम्बनेषु परिवर्तिताधरम्;

ंस्तत् । अग्रपादयोः स्वकीययोर्न्यस्ते पादतले यस्मिंस्तत् । निशात्यये विसर्गो
ृज्य गमनं तत्र यच्चुम्बनं तत्प्रार्थयन्त । 'दुह्याच्—' इत्यादिना द्विकर्मकत्वम् ।
। गोनर्दीयः—'रतावसाने यदि चुम्बनादि प्रयुज्य यायान्मदनोऽस्य वासः' इति ॥

प्रेक्ष्य दर्पणतलस्थमात्मनो राजवेषमतिशक्रशोभिनम् ।
पिप्रिये न स तथा यथा युवा व्यक्तलक्ष्म परिभोगमण्डनम् ॥३०॥

प्रेक्ष्येति ॥ युवा सोऽग्निवर्णोऽतिशक्रं यथा तथा शोभमानमतिशक्रशोभिनं दर्प-
लस्थं दर्पणसंक्रान्तमात्मनो राजवेषं प्रेक्ष्य तथा न पिप्रिये न तुतोष यथा व्यक्त-
म प्रकटचिह्नं परिभोगमण्डनं प्रेक्ष्य पिप्रिये ॥

मित्रकृत्यमपदिश्य[1] पार्श्वतः[2] प्रस्थितं तमनवस्थितं प्रियाः ।
विद्म[3] हे शठ पलायनच्छलान्यञ्जसेति रुरुधुः कचग्रहैः ॥ ३१ ॥

मित्रेति ॥ मित्रकृत्यं सुहृत्कार्यमपदिश्य व्याजीकृत्य पार्श्वतः प्रस्थितमन्यतो
ुमुद्युक्तमनवस्थितमवस्थातुमक्षमं तमग्निवर्णं प्रिया हे शठ हे गूढविप्रियकारिन् ।
ःविप्रियकृच्छठः' इति दशरूपके । तव पलायनस्य छलान्यञ्जसा तत्त्वतः । 'त-
द्धाञ्जसा द्वयम्' इत्यमरः । विद्म जानीम । 'विदो लटो वा' इति वैकल्पिको
ेशः । इति उक्त्वेति शेषः । कचग्रहैः केशाकर्षणै रुरुधुः । अत्र गोनर्दीनः—'ऋ-
ाताभिगमने मित्रकार्ये तथापदि । त्रिष्वेतेषु प्रियतमः क्षन्तव्यो वारगम्यया ॥'
। विरक्तलक्षणप्रस्तावे वात्स्यायनः—'मित्रकृत्यं चापदिशान्यत्र शेते' इति ॥

तस्य निर्दयरतिश्रमालसाः[4] कण्ठसूत्रमपदिश्य[5] योषितः ।
अध्यशेरत बृहद्भुजान्तरं पीवरस्तनविलुप्तचन्दनम्[6] ॥ ३२ ॥

तस्येति ॥ निर्दयरतिश्रमेणालसा निश्चेष्टा योषितः कण्ठसूत्रमालिङ्गनविशेषमप-
श्य व्याजीकृत्य पीवरस्तनाभ्यां विलुप्तचन्दनं प्रमृष्टाङ्गरागं तस्याग्निवर्णस्य बृह-
ान्तरमध्यशेरत वक्षःस्थले शेरते स्म । कण्ठसूत्रलक्षणं तु—'यत्कुर्वते वक्षसि
भस्य स्तनाभिघातं निबिडोपगूहात् । परिश्रमार्थं शनकैर्विदग्धास्तत्कण्ठसूत्रं प्रवद-
। सन्तः' इदमेव रतिरहस्ये स्तनालिङ्गनमित्युक्तम् । तथा च—'उरसि कमितुरु-
ादिशन्ती वराङ्गी स्तनयुगमुपधत्ते यत्स्तनालिङ्गनं तत्' इति ॥

संगमाय निशि गूढचारिणं चारदूतिकथितं पुरोगताः[7] ॥
वञ्चयिष्यसि कुतस्तमोवृतः कामुकेति चकृषुस्तमङ्गनाः ॥ ३३ ॥

१ उपदिश्य. २ पार्थिवम्. ३ विद्मते. ४ निर्दयरतश्रमालसाः. ५ अपविध्य. ६ कुङ्कुमम्.

**संगमायेति** ॥ संगमाय सुरतार्थं निशि गूढमज्ञातं चरतीष्टगृहं प्रति गच्छतीति गूढचारी। तं चारदूतिकथितम्। चरन्तीति चारा गूढचारिण्यः। 'ज्वलिति कसन्तभ्यो णः' इति णप्रत्ययः। चाराश्च ता दूत्यश्च चारदूत्यः। ताभिः कथितं निवेदितं तमग्निवर्णमङ्गनाः पुरोऽग्रे गताः। अवरुद्धमार्गाः सत्य इत्यर्थः। हे कामुक। तमसा वृतो गूढः सन्कुतोवञ्चयिष्यसीति। उपालभ्येति शेषः। चकृषुः। स्ववासं निन्युरित्यर्थः॥

**योषितामुडुपतेरिवार्चिषां स्पर्शनिर्वृतिमसाववाप्नुवन्।**
**आरुरोह कुमुदाकरोपमां रात्रिजागरपरो दिवाशयः॥ ३४॥**

**योषितामिति**॥ उडुपतेरिन्दोरर्चिषां भासामिव। 'ज्वाला भासो न पुंस्यर्चिः' इत्यमरः। योषितां स्पर्शनिर्वृतिं स्पर्शसुखमवाप्नुवन्। किंच। रात्रिषु जागरपरः। दिवा दिवसेषु शेते स्वपितीति दिवाशयः। 'अधिकरणे शेतेः' इत्यच्प्रत्ययः। असावग्निवर्णः कुमुदाकरस्योपमां साम्यमारुरोह प्राप॥

**वेणुना दशनपीडिताधरा वीणया नखपदाङ्कितोरवः।**
**शिल्पकार्य उभयेन वेजितास्तं विजिह्मनयना व्यलोभयन्॥३५॥**

**वेणुनेति** ॥ दशनैः पीडिताधरा दष्टोष्ठाः। नखपदैर्नखक्षतैरङ्कितोरवश्चिह्नितोत्सङ्गाः। व्रणिताधरोरुत्वादक्षमा इत्यर्थः। तथापि वेणुना वीणया चेत्युभयेन। अधरोरुपीडाकारिणेत्यर्थः। वेजिताः पीडिताः शिल्पं वेणुवीणावाद्यादिकं कुर्वन्तीति शिल्पकार्यो गायिकाः। 'कर्मण्यण्' इत्यण्। 'टिड्ढाणञ्–' इत्यादिना ङीप्। तं विजिह्मनयनाः कुटिलदृष्टयः सत्यः। स्वं चेष्टितं जानन्नपि वृथा नः पीडयतीति साभिप्रायं पश्यन्त्य इत्यर्थः। व्यलोभयन्। तथाविधालोकनमपि तस्याकर्षकमेवाभूदिति भावः॥

**अङ्गसत्त्ववचनाश्रयं मिथः स्त्रीषु नृत्यमुपधाय दर्शयन्।**
**स प्रयोगनिपुणैः प्रयोक्तृभिः संजघर्ष सह मित्रसंनिधौ॥ ३६॥**

**अङ्गेति** ॥ अङ्गं हस्तादि। सत्त्वमन्तःकरणम्। वचनं गेयं चाश्रयः कारणं यस्य तदङ्गसत्त्ववचनाश्रयम्। आङ्गिकसात्त्विकवाचिकरूपेण त्रिविधमित्यर्थः। यथाह भरतः— 'सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः' इति। नृत्यमभिनयं मिथो रहसि स्त्रीषु

---

१ स्पर्शनिर्वृतसुखानि. २ अनाप्नुवन्. ३ नखपदाङ्कितोरसः. ४ शिल्पिकार्यः; शिल्पिकार्यम्. ५ र.

कीषूपधाय निधाय दर्शयन् । स मित्रसंनिधौ सहचरसमक्षं प्रयोगेऽभिनये निपुणैः तेभिः प्रयोक्तृभिरभिनयार्थप्रकाशकैर्नाट्याचार्यैः सह संजघर्ष संघर्षं कृतवान् । र्षः पराभिभवेच्छा ॥

इतः प्रभृति तस्य कृत्रिमादिषु विरचितविहारप्रकारमाह—

अंसलम्बिकुटजार्जुनस्रजस्तस्य नीपरजसाङ्गरागिणः ।
प्रावृषि प्रमदबर्हिणेष्वभूत्कृत्रिमाद्रिषु विहारविभ्रमः ॥ ३७ ॥

अंसेति ॥ प्रावृष्यंसलम्बिन्यः कुटजानामर्जुनानां ककुभानां च स्रजो यस्य त- । नीपानां कदम्बकुसुमानां रजसाङ्गरागिणोऽङ्गरागवतस्तस्याग्निवर्णस्य प्रमदबर्हि- ष्वुन्मत्तमयूरेषु कृत्रिमादिषु विहार एव विभ्रमो विलासोऽभूदभवत् ॥

विग्रहाच्च शयने पराङ्मुखीर्नानुनेतुमबलाः स तत्वरे ।
आचकाङ्क्ष घनशब्दविक्लवास्ता विवृत्य विशतीर्भुजान्तरम् ॥३८॥

विग्रहादिति ॥ प्रावृषीत्यनुषज्यते । सोऽग्निवर्णो विग्रहात्प्रणयकलहाच्छयने परा- ङ्मुखीरबला अनुनेतुं न तत्वरे त्वरितवान् । किंतु घनशब्देन घनगर्जितेन विक्लवाश्चकि- । अतएव विवृत्य स्वयमेवाभिमुखीभूय भुजान्तरं विशतीः प्रविशन्तीः । 'आच्छी- द्योर्नुम्' इति नुम्विकल्पः । ता अबला आचकाङ्क्ष । स्वयंग्रहादेव सांमुख्यमैच्छदि- र्थः ॥

कार्तिकीषु सवितानहर्म्यभाग्यामिनीषु ललिताङ्गनासखः ।
अन्वभुङ्क्त सुरतश्रमापहां मेघमुक्तविशदां स चन्द्रिकाम् ॥ ३९ ॥

कार्तिकीष्विति ॥ कार्तिकस्येमाः कार्तिक्यः । 'तस्येदम्' इत्यण् । तासु यामि- नीषु निशासु । शरद्रात्रिष्वित्यर्थः । सवितानान्युपरिवस्त्रावृतानि हर्म्याणि भजतीति सवितानहर्म्यभाक् । भजेर्ण्विप्रत्ययः । हिमवारणार्थं सवितानमुक्तम् । ललिताङ्गनास- खः सोऽग्निवर्णः सुरतश्रमापहां मेघमुक्ता चासौ विशदा च ताम् । बहुलग्रहणात्सविशे- षणसमासः । चन्द्रिकामन्वभुङ्क्त ॥

सैकतं च सरयूं विवृण्वतीं श्रोणिबिम्बमिव हंसमेखलम् ।
स्वप्रियाविलसितानुकारिणीं सौधजालविवरैर्व्यलोकयत् ॥ ४० ॥

सैकतमिति ॥ किंच हंसा एव मेखला यस्य तत्सैकतं पुलिनं श्रोणिबिम्ब- मिव विवृण्वतीं । अतएव स्वप्रियाविलसितान्यनुकरोतीति तद्विधां सरयूम् ।

सौधस्य जालानि गवाक्षाः । त एव विवराणि । तैर्व्यलोकयत् ॥

मर्मरैरगुरुधूपगन्धिभिर्व्यक्तहेमरशनैस्तमेकतः ।
जह्रुराग्रथनमोक्षलोलुपं हैमनैर्निवसनैः सुमध्यमाः ॥ ४१ ॥

मर्मरैरिति ॥ मर्मरैः संस्कारविशेषाच्छब्दायमानैः 'अथ मर्मरः । स्वनिते वस्त्रपर्णानाम्' इत्यमरः । अगुरुधूपगन्धिभिर्व्यक्तहेमरशनैर्लौल्याल्लक्ष्यमाणकनकमेखलागुणैर्हैमनैर्हेमन्ते भवैः । 'सर्वत्राण्च तलोपश्च' इति हेमन्तशब्दादण्प्रत्ययस्तलोपश्च । निवसनैरंशुकैः सुमध्यमाः स्त्रिय एकतो नितम्बैकदेश आग्रथनमोक्षयोर्नीवीबन्धविस्रंसनयोर्लोलुपमासक्तं तं जह्रुराचकृषुः ॥

अर्पितस्तिमितदीपदृष्टयो गर्भवेश्मसु निवातकुक्षिषु ।
तस्य सर्वसुरतान्तरक्षमाः साक्षितां[2] शिशिररात्रयो ययुः ॥ ४२ ॥

अर्पितेति ॥ निवाता वातरहिताः कुक्षयोऽभ्यन्तराणि येषां तेषु गर्भवेश्मसु गृहान्तर्गृहेष्वर्पिता दत्ताः स्तिमिता निवातत्वान्निश्चला दीपा एव दृष्टयो याभिस्ताः । अत्र निमिषदृष्टित्वं च गम्यते । सर्वसुरतान्तरक्षमास्तापस्वेदापनोदनत्वाद्दीर्घकालत्वाच्च सर्वेषां सुरतान्तराणां सुरतभेदानां क्षमाः क्रियार्हाः शिशिररात्रयस्तस्याग्निवर्णस्य साक्षितां ययुः विविक्तकालदेशत्वाद्यथेच्छं विजहारेत्यर्थः ॥

दक्षिणेन पवनेन संभृतं प्रेक्ष्य चूतकुसुमं सपल्लवम् ।
अन्वनैषुरवधूतविग्रहास्तं[3] दुरुत्सहवियोगमङ्गनाः ॥ ४३ ॥

दक्षिणेनेति ॥ अङ्गना दक्षिणेन पवनेन मलयानिलेन संभृतं जनितं सपल्लवं चूतकुसुमं प्रेक्ष्यावधूतविग्रहास्त्यक्तविरोधाः सत्यो दुरुत्सहवियोगं दुःसहविरहं तमन्वनैषुः । तद्विरहमसहमानाः स्वयमेवानुनीतवत्य इत्यर्थः ॥

ताः[4] स्वमङ्कमधिरोप्य दोलया प्रेङ्खयन्[5]परिजनापविद्धया ।
मुक्तरज्जु निबिडं भयच्छलात्कण्ठबन्धनमवाप बाहुभिः ॥ ४४ ॥

ता इति ॥ ता अङ्गनाः स्वमङ्कं स्वकीयमुत्सङ्गमधिरोप्य परिजनेनापविद्धया संप्रेषितया दोलया मुक्तरज्जु त्यक्तदोलासूत्रं यथा तथा प्रेङ्खयंश्चालयन्भयच्छलात्पतनभयमिषाद्बाहुभिरङ्गनाभुजैर्निबिडं कण्ठबन्धनमपाव प्राप । स्वयंग्रहाश्लेषसुखमन्वभूदित्यर्थः ॥

तं पयोधरनिषिक्तचन्दनैर्मौक्तिकग्रथितचारुभूषणैः ।
ग्रीष्मवेषविधिभिः सिषेविरे श्रोणिलम्बिमणिमेखलैः प्रियाः ॥४५॥

तमिति ॥ प्रियाः पयोधरेषु स्तनेषु निषिक्तमुक्षितं चन्दनं येषु तैः मौक्तिकैर्ग्रथितानि प्रोतानि चारुभूषणानि येषु तैः । मुक्ताप्रायाभरणैरित्यर्थः । श्रोणिलम्बिन्यो म-

---

१ त्यक्त. २ साक्षताम्; प्रेक्ष्यताम्. ३ अवकीर्ण. ४ काश्चित्. ५ प्रेषयन्; प्रेंषयन्.

गमेखला मरकतादिमणियुक्तकटिसूत्राणि येषु तादृशैर्ग्रीष्मवेषविधिभिरुष्णकालोचितपथ्यविधानैः । शीतलोपायैरित्यर्थः । तमग्निवर्णं सिषेविरे ॥

यत्स [1]लग्नसहकारमासवं रक्तपाटलसमागमं पपौ ।
तेन तस्य मधुनिर्गमात्कृशश्चित्तयोनिरभवत्पुनर्नवः ॥ ४६ ॥

यदिति ॥ सोऽग्निवर्णो लग्नः सहकारश्चूतपल्लवो यस्मिंस्तं रक्तपाटलस्य पाटलकुसुमस्य समागमो यस्य तमासवं मद्यं पपौ । इति यत्तेनासवपानेन मधुनिर्गमाद्वसन्तागमात्कृशो मन्दवीर्यस्तस्य चित्तयोनिः कामः पुनर्नवः प्रबलोऽभवत् ॥

एवमिन्द्रियसुखानि निर्विशन्नन्यकार्यविमुखः स पार्थिवः ।
आत्मलक्षणनिवेदितानृतूनत्यवाहयदनङ्ग[2]वाहितः ॥ ४७ ॥

एवमिति ॥ एवमनङ्गवाहितः कामप्रेरितोऽन्यकार्यविमुखः स पार्थिव इन्द्रियाणां सुखानि सुखकराणि शब्दादीनि निर्विशन्ननुभवन्नात्मनो लक्षणैः कुटजस्रग्धारणादिचिह्नैर्निवेदितान् । अयमृतुरिदानीं वर्तत इति ज्ञापितान् । ऋतून्वर्षादीनत्यवाहयदगमयत् ॥

तं प्रमत्तमपि न प्रभावतः शेकुराक्रमितुमन्यपार्थिवः ।
आमयस्तु रतिरागसंभवो दक्षशाप इव चन्द्रमक्षिणोत् ॥ ४८ ॥

तमिति ॥ प्रमत्तं व्यसनासक्तमपि तं नृपं प्रभावतोऽन्यपार्थिवा आक्रमितुमभिभवितुं न शेकुर्न शक्ताः । रतिरागसंभव आमयो व्याधिस्तु । क्षयरोग इत्यर्थः । दक्षस्य दक्षप्रजापतेः शापश्चन्द्रमिव । आक्षिणोदकर्शयत् । शापोऽपि रतिरागसंभव इति । अत्र दक्षः किलान्याः स्वकन्या उपेक्ष्य रोहिण्यामेव रममाणं राजानं सोमं शशाप । स शापश्चाद्यापि क्षयरूपेण तं क्षिणोतीत्युपाख्यायते ॥

दृष्टदोषमपि तन्न [3]सोऽत्यजत्सङ्गवस्तु भिषजाम[4]नाश्रवः ।
स्वादुभिस्[5]तु विषयैर्हृतस्ततो दुःखमिन्द्रियगणो [6]निवार्यते ॥ ४९ ॥

दृष्टेति ॥ भिषजां वैद्यानामनाश्रवो वचसि न स्थितः । 'वचनेस्थित आश्रवः' इत्यमरः । अविधेय इत्यर्थः । स दृष्टदोषमपि । रोगजननादिति शेषः । तत्सङ्गस्य वस्तु सङ्गवस्तु स्त्रीमद्यादिकं सङ्गजनकं वस्तु नात्यजत् । तथाहि । इन्द्रियगणः स्वादुभिर्विषयैर्हृतस्तु हृतश्चेत्ततस्तेभ्यो विषयेभ्यो दुःखं कृच्छ्रेण निवार्यते । यदि वार्येतेति शेषः । दुस्त्यजाः खलु विषया इत्यर्थः ॥

तस्य पाण्डुवदनाल्पभूषणा सावलम्बगमना मृदुस्वना ।
राजयक्ष्मपरिहानिराययौ कामयानसमवस्थया तुलाम् ॥ ५० ॥

तस्येति ॥ तस्य राज्ञः पाण्डुवदना । अल्पभूषणा परिमिताभरणा । सावलम्बं

... ५ मः हि. ६ हि वार्यते.

दासादिहस्तावलम्बसहितं गमनं यस्यां सा सावलम्बगमना । मृदुस्वना हीनस्वरा । राज्ञः सोमस्य यक्ष्मा राजयक्ष्मा क्षयरोगः । तेन या परिहानिः क्षीणावस्था सा । कामयते विषयानिच्छति कामयानः । कमेर्णिङन्ताच्छानच् । 'अनित्यमागमशासनम्' इति मुमागमाभावः । एतदेवाभिप्रेत्योक्तं वामनेनापि—'कामयानशब्दः सिद्धोऽनादिश्च' इति । तस्य समवस्थया कामुकावस्थया तुलां साम्यमाययौ प्राप । कालकृतो विशेषोऽवस्था । 'विशेषः कालिकोऽवस्था' इत्यमरः ॥

व्योम पश्चिमकलास्थितेन्दु वा पङ्कशेषमिव घर्मपल्वलम् ।
राज्ञि तत्कुलमभूत्क्षयातुरे वामनार्चिरिव दीपभाजनम् ॥ ५१ ॥

व्योमेति ॥ राज्ञि क्षयातुरे सति तत्कुलं रघुकुलं पश्चिमकलायां स्थित इन्दुर्यस्मिंस्तत्कलावशिष्टेन्दु व्योम वा व्योमेव । वाशब्द इवार्थे । यथाह दण्डी—'इववद्वायथाशब्दौ' इति । पङ्कशेषं घर्मपल्वलमिव । वामनार्चिरल्पशिखं दीपभाजनं दीपपात्रमिवाभूत् ॥

बाढमेष दिवसेषु पार्थिवः कर्म साधयति पुत्रजन्मने ।
इत्यदर्शितरुजोऽस्य मन्त्रिणः शश्वदूचुरघशङ्किनीः प्रजाः ॥५२॥

बाढमिति ॥ बाढं सत्यमेव पार्थिवो दिवसेषु पुत्रजन्मने पुत्रोदयार्थं कर्म जपादिकं साधयति । इत्येवमदर्शितरुजो निगूहितरोगाः सन्तोऽस्य राज्ञो मन्त्रिणोऽघशङ्किनीर्व्यसनशङ्किनीः प्रजाः शश्वदूचुः ॥

स त्वनेकवनितासखोऽपि सन्पावनीमनवलोक्य संततिम् ।
वैद्ययत्नपरिभाविनं गदं न प्रदीप इव वायुमत्यगात् ॥५३॥

स इति ॥ स त्वग्निवर्णोऽनेकवनितासखः सन्नपि । पावनीं पित्रृणमोचनीं संततिमनवलोक्य । पुत्रमनवाप्येत्यर्थः । वैद्ययत्नपरिभाविनं गदं रोगम् । प्रदीपो वायुमिव । नात्यगान्नातिचक्राम । ममारेत्यर्थः ॥

तं गृहोपवन एव संगताः पश्चिमक्रतुविदा पुरोधसा ।
रोगशान्तिमपदिश्य मन्त्रिणः संभृते शिखिनि गूढमादधुः ॥५४॥

तमिति ॥ पश्चिमक्रतुविदान्त्येष्टिविधिज्ञेन पुरोधसा संगताः समेता मन्त्रिणो गृहोपवन एव गृहाराम एव । 'आरामः स्यादुपवनम्' इत्यमरः । रोगशान्तिमपदिश्य शान्तिकर्म व्यपदिश्य तमग्निवर्णं संभृते समिद्धे शिखिन्यग्नौ गूढमप्रकाशमादधुर्निदधुः ॥

तैः कृतप्रकृतिमुख्यसंग्रहैराशु तस्य सहधर्मचारिणी ।
साधु दृष्टशुभगर्भलक्षणा प्रत्यपद्यत नराधिपश्रियम् ॥ ५५ ॥

तैरिति ॥ आशु शीघ्रं कृतः प्रकृतिमुख्यानां पौरजनप्रधानानां संग्रहः संनिपात-

नं यैस्तादृशैस्तैर्मन्त्रिभिः साधु निपुणं दृष्टशुभगर्भलक्षणा परीक्षितशुभगर्भचिह्ना तस्याग्निवर्णस्य सहधर्मचारिणी नराधिपाश्रियं प्रत्यपद्यत राजलक्ष्मीं प्राप ॥

तस्यास्तथाविधनरेन्द्रविपत्तिशोका-
दुष्णैर्विलोचनजलैः प्रथमाभितप्तः ।
निर्वापितः कनककुम्भमुखोज्झितेन
वंश[1]ाभिषेकविधिना शिशिरेण गर्भः ॥ ५६ ॥

तस्या इति ॥ तथाविधया नरेन्द्रविपत्त्या यः शोकस्तस्मादुष्णैर्विलोचनजलैः प्रथमाभितप्तस्तस्या गर्भः कनककुम्भानां मुखैर्धारैरुज्झितेन शिशिरेण शीतलेन वंशाभिषेकविधिना लक्षणयाभिषेकजलेन निर्वापित आप्यायितः ॥

तं [2]भावार्थं प्रसवसमयाकाङ्क्षिणीनां प्रजाना-
[3]मन्तर्गूढं क्षितिरिव [4]नभोबीजमुष्टिं दधाना ।
मौलैः सार्धं [5]स्थविरसचिवैर्हेमसिंहासनस्था
राज्ञी राज्यं विधिव[6]दशिषद्भर्तुरव्याहताज्ञा ॥ ५७ ॥

तामिति ॥ प्रसवो गर्भमोचनम् । फलं च विवक्षितम् । 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः । तस्य यः समयस्तदाकाङ्क्षिणीनां प्रजानां भावार्थं भावाय । भूतय इत्यर्थः । 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु' इति यादवः । क्षितिरन्तर्गूढं नभोबीजमुष्टिमिव । श्रावणमास्युप्तं बीजमुष्टिं यथा धत्ते तद्वदित्यर्थः । मुष्टिशब्दो द्विलिङ्गः । 'अक्लीबौ मुष्टिमुस्तकौ' इति यादवः । अन्तर्गूढमन्तर्गतं तं गर्भं दधाना हेमसिंहासनस्थाव्याहताज्ञा राज्ञी मौलैर्मूले भवैर्मूलादागतैर्वा । आप्तैरित्यर्थः । स्थविरसचिवैर्वृद्धामात्यैः सार्धं भर्तू राज्यं विधिवद्विध्यर्हम् । यथाशास्त्रमित्यर्थः । अर्हार्थे वतिप्रत्ययः । अशिषच्छास्ति स्म । 'सर्तिशास्त्यर्तिभ्यश्च' इति च्लेरङ् । 'शास इदङ्हलोः' इतीकारः ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये अग्निवर्णशृङ्गारो नामैकोनविंशः सर्गः ।

---

॥ समाप्तम् ॥

---

१ वंशाभिषेकपयसा; राज्याभिषेकपयसा. २ भावाय प्रसवसमयाकाङ्क्षिणीनाम् ; भूत्यर्थं प्रसवसमयाकाङ्क्षिणीनाम् ; सतानप्रसवसमयाकाङ्क्षिणीनाम्. ३ अन्तर्गर्भा. ४ बभौ बीजमुष्टिम.

# रघुवंशश्लोकानां मातृकावर्णक्रमेणानुक्रमणी ।




अकरोत्स तदौर्ध्वदैहि ८।२६
अकरोदचिरेश्वरः क्षि ८।२०
अकार्यचिन्तासमकाल ६।३९
अकाले बोधितो भ्रात्रा प्रि १२।८१
अक्षबीजवलयेन नि ११।६६
अगस्त्यचिह्नादयनात्स १६।४४
अग्निवर्णमभिषिच्य १९।१
अग्रजेन प्रयुक्ताशीस्त १५।८
अङ्कमङ्कपरिवर्तनोचिते १९।१३
अङ्गदं चन्द्रकेतुं च ल १५।९०
अङ्गसत्ववचनाश्रयं १९।३६
अङ्गुलीकिसलयाग्रतर्ज १९।१७
अचिरायज्वभिर्भागं १०।४५
अजयदेकरथेन स ९।१०
अजस्य गृह्णतो जन्म १०।२४
अजिताधिगमाय मन्त्रि ८।१७
अजिनदण्डभृतं कुश ९।२१
अतिथिं नाम काकुत्स्थान्पु १७।१
अतिप्रबन्धप्रहितास्त्र ३।५८
अतिष्ठत्प्रत्ययापेक्ष १०।३
अतोऽयमश्वः कपिलानु ३।५०
अत्रानुगोदं मृगयानि १३।३५
अत्राभिषेकाय तपोध १३।५१
अत्रावियुक्तानि रथाङ्ग १३।३१
अथ काश्चिदजव्यपेक्ष ८।२४
अथ जातु रुरोर्गृहीत ९।७२
अथ जानपदो विप्रः शि १५।४२
अथ तं सवनाय दीक्षि ८।७५
अथ तस्य कथंचिदङ्क ८।७१
अथ तस्य विवाहकौतु ८।१
अथ तस्य विशांपत्यु १०।५०
अथ तेन दशाहतः प ८।७३
अथ धूमाभिताम्राक्षं वृ १५।४९
अथ नभस्य इव त्रिद ९।५४
अथ पथि गमयित्वा क्लृ ११।९३
अथ प्रजानामधिपः २।१
अथ प्रदोषे दोषज्ञः १।९३
अथ प्रभावोपनतैः ५।५२
अथ प्राचेतसोपज्ञं रा १५।६३
अथ मदगुरुपक्षैर्लोक १२।१०२
अथ मधुवनितानां ने १८।५२
अथ यथासुखमार्तव ९।४८
अथ यन्तारमादिश्य १।५४
अथ रामशिरश्छेदद १२।७४
अथ रोधसि दक्षिणोदधेः ८।३३
अथवा कृतवाग्द्वारे १।४
अथवा मम भाग्यविप्ल ८।४७
अथवा मृदु वस्तु हिंसि ८।४५
अथ वाल्मीकिशिष्येण पु १५।८०
अथ विधिमवसाय्य ५।७६
अथ वीक्ष्य रघुः प्रतिष्ठि ८।१०
अथ वेलासमासन्न १०।३५
अथ व्यवस्थापितवाक्क १४।५३
अथ समाववृते कुसु ९।२४
अथ स विषयव्यावृत्ता ३।७०
अथ सावरजो रामः प्रा १५।७०
अथ स्तुते बन्दिभिरन्व ६।८
अथाग्र्यमहिषी राज्ञः १०।६६
अथाङ्गदाश्लिष्टभुजं भु ६।५३
अथाङ्गराजादवतार्य ६।३०
अथात्मनः शब्दगुणं गु १३।१
अथाथर्वनिधेस्तस्य १।५९
अथाधिकस्निग्धविलोचने १४।२६
अथाधिशिश्ये प्रयतः ५।२८
अथानपोढार्गलमप्यगा १६।६
अथानाथाः प्रकृतयो मा १२।१२
अथानुकूलश्रवणप्र १४।४७
अथान्धकारं गिरि २।४६
अथाभ्यर्च्य विधातारं १।३५
अथार्धरात्रे स्तिमितप्र १६।४
अथास्य गोदानविधेर ३।३३
अथास्य रत्नग्रथितोत्त १६।४३
अथेतरे सप्त रघुप्रवी १६।१
अथेप्सितं भर्तुरुप ३।१
अथेश्वरेण क्रथकै ५।३९
अथैकधेनोरपरा २।४९
अथोपनीतं विधिवद्वि ३।२९
अथोपयन्त्रा सदृशेन ७।१
अथोपरिष्टाद्भ्रमरै ५।४३
अथोपशल्ये रिपुमग्नशल्य १६।३७
अथोरगाख्यस्य पुरस्य ६।५९
अथोर्मिलोलोन्मदराज १६।५४
अथोष्ट्रवामीशतवा ५।३२
अदःशरण्यं शरभङ्गना १३।४५
अदूरवर्तिनीं सिद्धिं १।८७
अद्धा श्रियं पालितसंग १३।६५
अधिकं शुशुभे शुभंयु ८।६
अधिगतं विधिवद्यद ९।२
अध्यास्य चाम्भः पृषतो ६।५१
अनम्राणां समुद्धर्तु ४।३५
अनयत्प्रभुशक्तिसंप ८।१९
अनवाप्तमवाप्तव्यं १०।३१
अनश्रुवानेन युगोप १८।४८
अनाकृष्टस्य विषयै १।२३
अनिग्रहत्रासविनी १३।५०
अनित्याः शत्रवो बाह्या १७।४५
अनीकिनीनां समरेऽग्र १८।१०
अनुग्रहप्रत्यभिनन्दि १४।७९
अनुभवन्नवदोलमृ ९।४६
अनुभूय वसिष्ठसंभृ ८।३
अनुसूयातिसृष्टेन पुण्य १२।२७
अनेन कथिता राज्ञो १०।५३

ेन पर्यासयताश्रु ६।२८
ेन पाणौ विधिवद्गृ ६।६३
ेन यूना सह पार्थि ६।३५
ेन सार्धं विहराम्बु ६।५७
न्यदा जगति राम इ ११।७३
न्येद्युरथ काकुत्स्थः सं १५।७५
न्येद्युरात्मानुचर २।२६
न्योन्यदर्शनप्राप्तवि १२।८७
न्योन्यसूतोन्मथनाद ७।५२
न्वियेष सदृशीं स च ११।५०
नतुषारतया विश ९।३९
पथेन प्रववृते न जातूप१७।५४
पनीतशिरस्त्राणाः ४।६४
पशूलं तमासाद्य ल १५।१७
पशोकमनाः कुटुम्बि ८।८६
पि तुरगसमीपादु ९।६७
पि प्रभुः सानुशयोऽधु १४।८३
पि प्रसन्नेन मह ५।१०
प्यग्रणीर्मन्त्रकृता ५।४
प्यर्धमार्गे परबाण ७।४५
ब्रवीच्च भगवन्मतंग ११।३९
भिनयान्परिचेतु ९।३३
भिभूय विभूतिमार्त ८।३६
भ्यभूयत वाहानां ४।५६
भ्यासनिगृहीतेन १०।२३
भ्युत्थिताग्निपिशुनै १।५३
मदयन्मधुगन्धस ९।४२
मंस्त चानेन परार्ध्य ३।२७
मी जनस्थानमपोढ १३।२२
मी शिरीषप्रसवावतं १६।६१
अमुं पुरः पश्यसि दे २।३६
अमुं सहासप्रहितेक्ष १३।४२
अमूर्विमानान्तरलम्बि १३।३३
अमेयो मितलोकस्त्व १०।१८
अमोघं संदधे चास्मै ध १२।९७
अमोच्यमश्वं यदि मन्य ३।६५
अयं सजातोऽनुगिरं त १३।४९

अरिष्टशय्यां परितो ३।१५
अरुणरागनिषेधिभि ९।४३
अर्घ्यमर्घ्यमिति वादिनं ११।६९
अर्चिता तस्य कौसल्या १०।५५
अर्धाञ्चिता सत्वरमुत्थि ७।१०
अर्पितस्तिमितदीपदृ १९।४२
अलं महीपाल तव २।३४
अलं ह्रिया मां प्रति य ५।५८
अलिभिरञ्जनबिन्दुम ९।४१
अवकाशं किलोदन्वा ४।५८
अवगच्छति मूढचेत ८।८८
अवजानासि मा यस्मा १।७७
अवनिमेकरथेन व ९।११
अवन्तिनाथोऽयमुदग्र ६।३२
अवभृथप्रयतो निय ९।२२
अवाकिरन्वयोवृद्धा ४।२७
अवेक्ष्य रामं ते तस्मि १५।१३
अवैमि कार्यान्तरमानु १६।८२
अवैमि चैनामनघेति १४।४०
अंशे हिरण्याक्षरिपोः स १८।२५
अशून्यतीरां मुनिसंनि १४।७६
अंसलम्बिकुटजार्जुन १९।३७
असकृदेकरथेन त ९।२३
असङ्गमद्रिष्वपि सार ३।६३
असज्जनेन काकुत्स्थः प्र १२।४६
असमाप्तविधिर्यतो मु ८।७६
असह्यपीडं भगवन्नृ १।७१
असह्यविक्रमः सह्यं ४।५२
असौ कुमारस्तमजोऽनु ६।७८
असौ पुरस्कृत्य गुरुं प १३।६६
असौ महाकालनिकेत ६।३४
असौ महेन्द्रद्विपदान १३।२०
असौ महेन्द्रादिसमान ६।५४
असौ शरण्यः शरणोन्मु ६।२१
अस्त्रं हरादाप्तवता दु ६।६२
अस्य प्रयाणेषु समग्र ६।३३
अस्याङ्कलक्ष्मीर्भव दीर्घ ६।४३

आकारसदृशप्रज्ञः १।१५
आकीर्णमृषिपत्नीना १।५०
आकुञ्चिताग्राङ्गुलिना ततो ६।१५
आततज्यमकरोत्स सं ११।४५
आतपात्ययसंक्षिप्त १।५२
आत्तशस्त्रस्तदध्यास्य प्र १५।४६
आदिदेशाथ शत्रुघ्नं ते १५।६
आदिष्टवर्त्मा मुनिभिः स १५।१
आधारबन्धप्रमुखैः ५।६
आधूय शाखाः कुसुमद्रु १६।३६
आधोरणानां गजसं ७।४६
आनन्दजः शोकजमश्रु १४।३
आपादपद्मं प्रणताः ४।३७
आपिञ्जरा बद्धरजः क १६।५१
आपीनभारोद्वहन २।१८
आमुक्ताभरणः स्रग्वी हं १७।२५
आयोधने कृष्णगतिं स ६।४२
आराध्य विश्वेश्वरमीश्व १८।२४
आरूढमद्रीनुदधीन्वि ६।७७
आलोकमार्गं सहसा व्र ७।६
आवर्ज्य शाखाः सदयं च१६।१९
आवर्तशोभा नतनाभि १६।६३
आवृण्वतो लोचनमार्ग ७।४२
आशास्यमन्यत्पुनरु ५।३४
आश्वास्य रामावरजः स १४।५८
आससाद मिथिलां स वे ११।५२
आससाद मुनिरात्मन ११।२३
आसां जलास्फालनतत्प १६।६२
आसारसिक्तक्षितिबाष्प १३।२९
आसीद्वरः कण्टकितप्र ७।२२
आस्फालितं यत्प्रमदाक १६।१३
आस्वादवद्भिः कवलै २।५
इक्षुच्छायनिषादिन्य ४।२०
इक्ष्वाकुवंशगुरवे प्र १३।७०
इक्ष्वाकुवंशप्रभवः क १४।५५
इक्ष्वाकुवंशप्रभवो ५।५५
इक्ष्वाकुवंश्यः ककुदं नृ ६।७१

इतरेऽपि रघोर्वंश्यास्त्र १५।३५
इतस्ततश्च वैदेही म १२।५९
इति क्रमात्प्रयुञ्जानो रा १७।६८
इति क्षितीशो नवतिं न ३।६९
इति जित्वा दिशो जिष्णु ४।८५
इति प्रगल्भं पुरुषा २।४१
इति प्रगल्भं रघुणा स ३।४७
इति प्रतिश्रुते राज्ञा जा १५।७४
इति प्रसादयामासुस्ते १०।३३
इति वादिन एवास्या १।८२
इति विज्ञापितो राज्ञा १।७३
इति विरचितवाग्भिः ५।७५
इति विस्मृतान्यकरणी ९।६९
इति शत्रुषु चेन्द्रियेषु ८।२३
इति शिरसि स वामं पा ७।७०
इति स्वसुर्भोजकुलप्र ७।२९
इति संतर्ज्य शत्रुघ्नं रा १५।१९
इत्थं क्षितीशेन वशी २।६७
इत्थं गते गतघृणः कि ९।८१
इत्थं जनितरागासु प्र १७।४४
इत्थं द्विजेन द्विजरा ५।२३
इत्थं नागस्त्रिभुवन गु १६।८८
इत्थं प्रयुज्याशिषम ५।३५
इत्थं व्रतं धारयतः २।२५
इत्यध्वनः कैश्चिदहोभि १६।३५
इत्यपास्तमखविघ्नयो ११।३०
इत्यर्घ्यपात्रानुमित ५।१२
इत्याप्तवचनाद्रामो वि १५।४८
इत्या प्रसादादस्यास्त्वं १।९१
इत्यारोपितपुत्रास्ते ज १५।९१
इत्युक्तवन्तं जनकात्म १४।४३
इत्युक्त्वा मैथिलीं भर्तुर १२।३८
इत्युद्गताः पौरवधूमु ७।१६
इत्यूचिवानुपहृताभरणः १६।८६
इदमुच्छ्वसितालकं मु ८।५५
इन्दीवरश्यामतनुर्नृ ६।६५
इन्दोरगतयः पद्मे १७।७५
इन्द्राद्वृष्टिर्नियमितगदो १७।८१

इमां तटाशोकलतां च १३।३२
इमां स्वसारं च यवीय १६।८५
इयमप्रतिबोधशायि ८।५८
ईप्सितं तदवज्ञाना १।७९
उत्खातलोकत्रयकण्टके १४।७३
उत्तस्थुषः सपदि पल्व ९।५९
उत्तिष्ठ वत्सेत्यमृता २।६१
उत्तिष्ठ वत्से ननु सानु १४।६
उत्थापितः संयति रेणु ७।३९
उदक्प्रतस्थे स्थिरधीःस्रा १५।९८
उदधेरिव रत्नानि १०।३०
उदयमस्तमयं च र ९।९
उदये मदवाच्यमुज्झ ८।८४
उदायुधानापततस्ता १२।४४
उद्बन्धकेशश्च्युतपत्र १६।६७
उद्यच्छमाना गमनाय १६।२९
उद्यतैकभुजयष्टिमा ११।१७
उन्नाभ इत्युद्गतनाम १८।२०
उन्मुखः सपदि लक्ष्मणा ११।२६
उपकूलं स कालिन्द्याः पु १५।२८
उपगतोऽपि च मण्डल ९।१५
उपचितावयवा शुचि ९।४४
उपपन्नं ननु शिवं १।६०
उपययौ तनुतां मधु ९।३८
उपशल्यनिविष्टैस्तैश्च १५।६०
उपस्थितविमानेन ते १५।१००
उपस्थितां पूर्वमपास्य १४।६३
उपहितं शिशिरापग ९।३१
उपात्तविद्यं विधिव ५।३८
उपान्तयोर्निष्कुषितं वि ७।५०
उपान्तवानीरवनोप १३।३०
उपेत्य मुनिवेषोऽथ कालः १५।९२
उपेत्य सा दोहददुःख ३।६
उभयमेव वदन्ति म ९।३
उभयोरपि पार्श्ववर्ति ८।३९
उभयोर्न तथा लोकः प्रा १५।६८
उभावुभाभ्यां प्रणतौ ह १४।२
उमावृषाङ्कौ शरज ३।२३
उरस्यपर्याप्तनिवेश १८।४७

उषसि स गजयूथक ९।७१
ऋत्विजः स तथानर्च दक्षि १७।८०
ऋद्धापणं राजपथं स १४।३०
ऋषिदेवगणस्वधाभु ८।३०
ऋषीन्विसृज्य यज्ञान्ते सु १५।८६
ऋष्यशृङ्गादयस्तस्य १०।४
एकातपत्रं जगतः २।४७
एको दाशरथिः कामं या १२।४५
एतद्गिरेर्माल्यवतः पु १३।२६
एतन्मुनेर्मानिनि शात १३।३८
एताः करोत्पीडितवारि १६।६६
एता गुरुश्रोणिपयोधर १६।६०
एतावदुक्तवति दाश १३।६८
एतावदुक्त्वा प्रतिया ५।१८
एतावदुक्त्वा विरते २।५१
एते वयं सैकतभिन्न १३।१७
एवं तयोक्ते तमवेक्ष्य ६।२५
एवं तयोरध्वनि दै ५।६०
एवमात्तरतिरात्मसं ११।५७
एवमाप्तवचनात्स पौ ११।४२
एवमिन्द्रियसुखानि नि १९।४७
एवमुक्तवति भीमद ११।७९
एवमुक्ते तया साध्व्या र १५।८२
एवमुद्यन्प्रभावेण शास्त्र १७।७७
एषा त्वया पेशलमध्य १३।३४
एषा प्रसन्नस्तिमितप्र १३।४८
एषोऽक्षमालावलयं मृ १३।४३
ऐन्द्रमस्त्रमुपादाय श १५।२२
ऐन्द्रिः किल नखैस्तस्या वि १२।२२
ऐरावतास्फालनविश्लि ६।७३
कण्डूयमानेन कटं २।३७
कण्ठसक्तमृदुबाहु ब १९।२९
कथं नु शक्योऽनुनयो २।५४
कराभिघातोत्थितकन्दु १६।८३
करेण वातायनलम्बि १३।२१
कलत्रनिन्दागुरुणा कि १४।३३
कलत्रवन्तमात्मान १।३२
कलत्रवानहं बाले कनी १२।३४
कलमन्यभृतासु भाषि ८।५९

कल्याणबुद्धेरथवात १४।६२
कश्चित्कराभ्यामुपगूढ ६।१३
कश्चिद्द्विषत्खड्गहृतो ७।५१
कश्चिद्यथाभागमवस्थि ६।१९
कातरोऽसि यदि वोद्गता ११।७८
कातर्यं केवला नीतिः शौ १७।४७
का त्वं शुभे कस्य परिग्र १६।८
काप्यभिख्या तयोरासी १।४६
कामं कर्णान्तविश्रान्ते ४।१३
कामं जीवति मे नाथ इ १२।७५
कामं न सोऽकल्पत पैतृ १८।४०
कामं नृपाः सन्तु सहस्र ६।२२
कामं प्रकृतिवैराग्यं स १७।५५
कामरूपेश्वरस्तस्य ४।८४
कामिनीसहचरस्य कामि १९।५
काम्बोजाः समरे सोढुं ४।६९
कायेन वाचा मनसा ५।५
कार्तिकीषु सवितानह १९।३९
कार्येषु चैककार्यत्वा १०।४०
कार्ष्णेन पत्रिणा शत्रुः स १५।२४
कालान्तरश्यामसुधेषु १६।१८
काषायपरिवीतेन स्व १५।७७
किंतु वध्वां तवैत १।६५
किमत्र चित्रं यदि का ५।३३
किमप्यहिंस्यस्तव २।५७
किमात्मनिर्वादकथा मु १४।३४
किंवा तवात्यन्तवियोग १४।६५
कुमारभृत्याकुशलैरनु ३।१२
कुमाराः कृतसंस्कारा १०।७८
कुम्भकर्णः कपीन्द्रेण तु १२।८०
कुम्भपूरणभवः पटु ९।७३
कुम्भयोनिरलंकारं त १२।५५
कुरुष्व तावत्करभो १३।१८
कुलेन कान्त्या वयसा न ६।७९
कुशावतीं श्रोत्रियसात्स १६।२५
कुशेशयाताम्रतलेन ६।१८
कुसुमं कृतदोहदस्त्व ८।६२
कुसुमजन्म ततो नव ९।२६
कुसुमैर्ग्रथितामपार्थि ८।३४
कुसुमोत्खचितान्वलीभृ ८।५३
कूटयुद्धविधिज्ञेऽपि न १७।६९
कृच्छ्रलब्धमपि लब्धव ११।२
कृतदण्डः स्वयं राज्ञा ले १५।५३
कृतप्रतिकृतप्रीतैस्तयो १२।९४
कृतः प्रयत्नो न च देव १६।७६
कृतवत्यसि नावधीर ८।४८
कृतसीतापरित्यागः स १५।१
कृताञ्जलिस्तत्र यदम्ब १४।१६
कृताभिषेकैर्दिव्यायां १०।६३
कृशानुरपधूमत्वा १०।७४
कृतपुष्पशयनाँल्लतागृ १९।२३
केवलं स्मरणेनैव १०।२९
कैकेय्यास्तनयो जज्ञे १०।७०
कैलासगौरं वृष २।३५
कोशेनाश्रयणीयत्वमि १७।६०
कौशिकेन स किल क्षिती ११।१
कौसल्य इत्युत्तरकोस १८।२७
क्रतुषु तेन विसर्जित ९।२०
क्रथकैशिकवंशसंभ ८।८२
क्रमेण निस्तीर्य च दो ३।७
क्रियानिमित्तेष्वपि व ५।७
क्रियाप्रबन्धादयमध्व ६।२३
क्रीडापतत्रिणोऽप्यस्य प १७।२०
क्रोशार्धं प्रकृतिपुरःस १३।७९
क्लेशावहा भर्तुरलक्ष १४।५
क्वचिच्च कृष्णोरगभूष १३।५७
क्वचित्खगानां प्रियमान १३।५५
क्वचित्पथा संचरते सु १३।१९
क्वचित्प्रभा चान्द्रमसी त १३।५६
क्वचित्प्रभालेपिभिरिन्द्र १३।५४
क्व सूर्यप्रभवो वंशः १।२
क्षणमात्रसखीं सुजात ८।३७
क्षतात्किल त्रायत इ २।५३
क्षत्रजातमपकारवै ११।७१
क्षत्रियान्तकरणोऽपि वि ११।७५
क्षितिरिन्दुमती च भामि ८।२८
खर्जूरीस्कन्धनद्धानां ४।५७
गुणैराराधयामासु १०।८५
गन्धश्च धाराहतपल्व १३।२७
गरुडापातविश्लिष्टमेघ १२।७६
गर्भं दधत्यर्कमरीचयो १३।४
गुणवत्सुतरोपितश्रि ८।११
गुप्तं ददृशुरात्मानं १०।६०
गुरोर्नियोगाद्वनितां व १४।६१
गुरोर्यियक्षोः कपिलेन १३।३
गुरोः सचानन्तरमन्त १८।१५
गुरोः सदारस्य निपी २।२३
गुर्वर्थमर्थी श्रुतपा ५।२४
गृहिणीसचिवः सखी मि ८।६७
गृहीतप्रतिमुक्तस्य ४।४३
गेये को नु विनेता वा क १५।६९
गौरवाद्यदपि जातु म १९।७
ग्रथितमौलिरसौ वन ९।५१
ग्रामेष्वात्मविसृष्टेषु १।४४
घ्राणकान्तमधुगन्धक १९।११
चकम्पे तीर्णलौहित्ये ४।८१
चन्दनेनाङ्गरागं च मृग १७।२४
चतुर्भुजांशप्रभवः स १६।३
चतुर्वर्गफलं ज्ञानं १०।२२
चमरान्परितः प्रवर्ति ९।६६
चरणयोर्नखरागस ९।१३
चरतः किल दुश्चरं त ८।७९
चारुनृत्यविगमे च त १९।१५
चित्रकूटवनस्थं च कथि १२।१५
चित्रद्विपाः पद्मवनाव १६।१६
चुम्बने विपरिवर्तिता १९।२७
चूर्णबभ्रु लुलितस्रगा १९।२५
छायामण्डललक्ष्येण ४।५
छायाविनीताध्वपरिश्र १३।४६
जगाद चैनामयमङ्ग ६।२७
जगृहुस्तस्य चित्तज्ञाः प १५।९९
जनपदे न गदः पद ९।४
जनस्य तस्मिन्समये वि १६।५३
जनस्य साकेतनिवा ५।३१
जनाय शुद्धान्तचरा ३।१६

जयश्रियः संवननं य १६।७४
जलानि या तीरनिखात १३।६१
जहार चान्येन मयूर ३।५६
जातः कुले तस्य किलोरु ६।७४
जात्यस्तेनाभिजातेन १७।४
जाने विसृष्टां प्रणिधान १४।७२
जाने वो रक्षसाक्रान्ता १०।३८
जालान्तरप्रेषितदृष्टि ७।९
जिगमिषुर्धनदाध्युषि ९।२५
जुगूह तस्याः पथि ल १४।४९
जुगोपात्मानमत्र १।२१
जेतारं लोकपालानां स्व १२।८९
ज्ञाने मौनं क्षमा शक्तौ १।५२
ज्याघातरेखे सुभुजो भु ६।५५
ज्यानिनादमथ गृह्णती ११।१५
ज्याबन्धनिष्पन्दभुजेन ६।४०
ज्येष्ठाभिगमनात्पूर्वं ते १२।३५
तं रागबन्धिष्ववितृप्तमे १८।१९
तं राजवीथ्यामधिहस्ति १८।३९
तं वाहनादवनतोत्त ९।६०
तं विनिष्पिष्य काकुत्स्थौ १२।३०
तं विस्मितं धेनुरुवाच २।६२
तं वेधा विदधे नूनं १।२९
तं शैरैः प्रतिजग्राह ख १२।४७
तं श्लाघ्यसंबन्धमसौ ५।४०
तं सन्तः श्रोतुमर्हन्ति १।१०
तं कर्णभूषणनिपी ५।६५
तं कर्णमूलमागत्य रामे १२।२
तं कृतप्रणतयोऽनुजी १९।८
तं कृपामृदुरवेक्ष्य भा ११।८३
तं गृहोपवन एव संग १९।५४
तच्चात्मचिन्तासुलभं वि १४।२०
तच्चोदितश्च तमनु ९।७७
ततः कक्ष्यान्तरन्यस्तं ग १७।२१
ततः परं वज्रधरप्र १८।२१
ततः परं तत्प्रभवः प्र १८।३४
ततः परं तेन मखाय ३।३९
ततः परं दुःप्रसहं द्वि ६।३१
ततः परमभिव्यक्तसौ १७।४०
ततः प्रजानां चिरमात्म ३।३५
ततः प्रतस्थे कौबेरीं ४।६६
ततः प्रहस्यापभयः पु ३।५१
ततः प्रियोपात्तरसेऽध ७।६३
ततः स कृत्वा धनुरात १६।७७
ततः सपर्यां सपशूपहा १६।३९
ततः समाज्ञापयदाशु १६।७५
ततः समानीय समा २।६४
ततः सुनन्दावचनाव ६।८०
ततस्तदालोकनतत्प ७।५
ततो गौरीगुरुं शैल ४।७१
ततो धनुष्कर्षणमूढ ७।६२
ततो निषङ्गादसमग्र ३।६४
ततो नृपाणां श्रुतवृत्त ६।२०
ततो नृपेणानुगताः स्त्रि १६।६९
ततो बिभेद पौलस्त्यः श १२।७७
ततोऽभिषङ्गानिलविप्र १४।५४
ततो मृगेन्द्रस्य मृगे २।३०
ततो यथावद्विहिता ५।१९
ततोऽवतीर्याशु करेणु ७।१७
ततो वेलातटेनैव ४।४४
तत्तद्भूमिपतिः पत्न्यै १।४७
तत्प्रतीपपवनादिवैक्ल ११।६२
तत्प्रसुप्तभुजगेन्द्रभी ११।४४
तत्प्रार्थितं जवनवाजि ९।५६
तत्र जन्यं रघोर्घोरं ४।७७
तत्र तीर्थसलिलेन दी १९।२
तत्र दीक्षितमृषिं रर ११।२४
तत्र नागफणोत्क्षिप्तसिं १५।८३
तत्र यावधिपती मख ११।२७
तत्र सेकहतलोचनाञ्जनै १९।१०
तत्र सौधगतः पश्यन्य १५।३०
तत्र स्वयंवरसमा ५।६४
तत्र हूणावरोधानां ४।६८
तत्राक्षोभ्यं यशोराशिं ४।८०
तत्राभिषेकप्रयता व १४।८२
तत्रार्चितो भोजपतेः पु ७।२०
तत्रेश्वरेण जगतां प्र १३।७७
तत्रैनं हेमकुम्भेषु सं १७।१०
तथापि शस्त्रव्यवहार ३।६२
तथेति कामं प्रतिशुश्रुवा ३।६७
तथेति गामुक्तवते २।५९
तथेति तस्याः प्रणयं १६।२३
तथेति तस्याः प्रतिगृह्य १४।६८
तथेति तस्यावितथं ५।२६
तथेति प्रतिजग्राह १।९२
तथेति प्रतिपन्नाय वि १५।९३
तथेत्युपस्पृश्य पयः ५।५९
तथैव सुग्रीवविभीष १४।१७
तदङ्गनिस्यन्दजलेन ३।४१
तदङ्कमग्र्यं मघवन्म ३।४५
तदञ्जनक्लेदसमाकु ७।२७
तदद्भुतं संसदि रात्रि १६।२४
तदपोहितुमर्हसि प्रि ८।५४
तदन्यतस्तावदन ५।१७
तदन्वये शुद्धिमति १।१२
तदर्हसीमां वसतिं वि १६।२२
तदलं तदपायचिन्त ८।८३
तदात्मसंभवं राज्ये १७।८
तदाननं मृत्सुरभि ३।३
तदाप्रभृत्येव वन २।३८
तदीयमाक्रन्दितमा २।२८
तदेतदाजानुविलम्बि १६।८४
तदेष सर्गः करुणार्द्र १४।४२
तद्गतिं मतिमतां वरे ११।८७
तद्गीतश्रवणैकाग्रा सं १५।६६
तद्रक्ष कल्याणपर २।५०
तद्व्योम्नि शतधा भिन्नं १२।९८
तनुत्यजां वर्मभृतां वि ७।४८
तनुलताविनिवेशित ९।५२
तं तस्थिवांसं नगरोप ५।६१
तं दधन्मैथिलीकण्ठनि १५।५६
तं धूपाश्यानकेशान्तं तो १७।२३
तन्मदीयमिदमायुधं ११।७७
तं न्यमन्त्रयत संभृत ११।३२
तपस्यनधिकारित्वात्प्र १५।५१
तपस्विवेषक्रिययापि १४।९
तपस्विसंसर्गविनीत १४।७५

तमध्वराय मुक्ताश्वं र १५।५८
तमध्वरे विश्वजिति ५।१
तमपहाय ककुत्स्थकु ९।१६
तमब्रवीत्सा गुरुणा नव १६।९
तमभ्यनन्दत्प्रथमं प्र ३।६८
तमभ्यनन्दत्प्रणतं ल १५।४०
तमरण्यसमाश्रयोन्मु ८।१२
तमर्चयित्वा विधिव ५।३
तमलभन्त पतिं पति ९।१७
तमशक्यमपाक्रष्टुं नि १२।१७
तमश्रु नेत्रावरणं प्रमृज्य १४।७१
तमातिथ्यक्रियाशान्त १।५८
तमात्मसंपन्नमनिन्दि १८।१८
तमादौ कुलविद्यानाम १७।३
तमाधूतध्वजपटं व्यो १२।८५
तमापतन्तं नृपते ५।५०
तमार्यगृह्यं निगृ २।३३
तमाहितौत्सुक्यमद २।७३
तमीशः कामरूपाणा ४।८३
तमुद्वहन्तं पथि भोज ७।३५
तमुपाद्रवदुद्यम्य दक्षि १५।२३
तमृषिः पूजयामास कु १५।१२
तं पयोधरनिषिक्तच १९।४५
तं पितुर्वधभवेन म ११।६७
तं प्रमत्तमपि न प्रभाव १९।४८
तं प्राप्य सर्वावयवान ६।६९
तं प्रीतिविशदैर्नेत्रैरन्व १७।३५
तं भावार्थं प्रसवसमया १९।५७
तं भूपतिर्भासुरहे ५।३०
तया स्रजा मङ्गलपुष्प ६।८४
तया हीनं विधातर्मा १।७०
तयोर्दिवस्पतेरासीदेकः १७।७
तयोरक्षन्स विघ्नेभ्यस्त १७।६५
तयोरपाङ्गप्रतिसारि ७।२३
तयोरुपान्तस्थितसिद्ध ३।५७
तयोर्जगृहतुः पादा १।५७
तयोर्यथाप्रार्थितमिन्द्रि १४।२५
तयोश्चतुर्दशैकेन १२।६
तयोस्तस्मिन्नवीभूत १२।५६
तद्वल्गुना युगपद ५।६८
तव निःश्वसितानुकारि ८।६४
तव मन्त्रकृतो मन्त्रै १।६१
तवार्हतो नाभिगमे ५।११
तवाधरस्पर्धिषु विद्रु १३।१३
तवोरुकीर्तिः श्वशुरः स १४।७४
तस्मात्पुरःसरबिभीष १३।६९
तस्मात्समुद्रादिव मथ्य १६।७९
तस्मादधः किंचिदिवाव १८।४१
तस्मिन्कुलापीडनिभे वि १८।२९
तस्मिन्क्षणे पालयितुः २।६०
तस्मिन्गते द्यां सुकृतो १८।२२
तस्मिन्गते विजयिनं प ११।९२
तस्मिन्नभियोतितबन्धु ६।३६
तस्मिन्नवसरे देवाः १०।५
तस्मिन्नात्मचतुर्भागे प्रा १५।९६
तस्मिन्नास्थदिषीकास्त्रं १२।२३
तस्मिन्प्रयाते परलोक १८।१६
तस्मिन्रामशरोत्कृत्ते ब १२।४९
तस्मिन्समावेशितचित्त ६।७०
तस्मिन्हृदः संहितमात्र १६।७८
तस्मिन्विधानातिशये वि ६।११
तस्मै कुशलसंप्रश्न १०।३४
तस्मै निशाचरैश्वर्यं प्र १२।६९
तस्मै विसृज्योत्तरकोस १८।७
तस्मै सभ्याः सभार्याय १।५५
तस्मै सम्यग्घुतो वह्नि ४।२५
तस्य कर्कशविहारसं ९।६८
तस्य कल्पितपुरस्क्रिया ११।५१
तस्य जातु मरुतः प्रति ११।५८
तस्य दाक्षिण्यरूढेन १।३१
तस्य द्विपानां मदवारि १६।३०
तस्य निर्दयरतिश्रमाल १९।३२
तस्य पाण्डुवदनाल्पभू १९।५०
तस्य पूर्वोदितां निन्दां द्वि १५।५७
तस्य प्रभानिर्जितपुष्प १८।३२
तस्य प्रयातस्य वरूथि १६।२८
तस्य प्रसह्य हृदयं कि ८।९३
तस्य मार्गवशादेका व १५।११
तस्य संवृतमन्त्रस्य १।२०
तस्य [illegible] मा १७।१८
तस्य संस्तूयमानस्य च १५।२७
तस्य सावरणदृष्टसंधयः १९।१६
तस्य स्तनप्रणयिभिर्मु ९।५५
तस्य स्फुरति पौलस्त्यः सी १२।९०
तस्य वीक्ष्य ललितं वपुः ११।३८
तस्यां रघोः सूनुरुपस्थि ६।६८
तस्याः खुरन्यासपवित्र २।२
तस्याधिकारपुरुषैः ५।६३
तस्यानलौजास्तनयस्त १८।५
तस्यानीकैर्विसर्पद्भि ४।५३
तस्यान्मुच्ये यथा तात १।७२
तस्यान्वये भूपतिरेष ६।४१
तस्यापनोदाय फलप्र १४।३९
तस्यापरेष्वपि मृगेषु ९।५८
तस्याः प्रसन्नेन्दुमुखः २।६८
तस्याः प्रतिद्वन्द्विभवाद्वि ७।६८
तस्याः प्रकामं प्रियदर्श ६।४४
तस्याभवत्सूनुरुदार १८।१७
तस्याभिषेकसंभारं क १२।४
तस्यामात्मानुरूपा १।३३
तस्यामेवास्ययामिन्याम १५।१३
तस्यायमन्तर्हितसौधभा १३।४०
तस्यालमेषा क्षुधि २।३९
तस्यावसाने हरिदश्वधा १८।२३
तस्याः स रक्षार्थमनल्प ७।३६
तस्याः स राजोपपदं नि १६।४०
तस्यास्तथाविधनरेन्द्र १९।५६
तस्याः स्पृष्टे मनुजपति १६।८७
तस्यैकनागस्य कपो ५।४७
तस्यैकस्योच्छ्रितं छत्रं मू १७।३३
तस्यै प्रतिश्रुत्य रघुप्र १४।२९
तस्यै भर्तुरभिज्ञानमङ्गु १२।६२
तस्योत्सृष्टनिवासेषु ४।७६
तस्योदये चतुर्मूर्तेः १०।७३
तस्योपकार्यारचितो ५।४१
तस्यौघमहती मूर्ध्नि नि १७।१४
तं स्वसा नागराजस्य १७।६
तां शिल्पिसंघाः प्रभुणा नि १६।३८
तां सैव वेत्रग्रहणे नि ६।२६
तां [illegible]

तात शुद्धा समक्षं नः स्नुषा १५।७२
ता नराधिपसुता नृपा ११।५६
तां तामवस्थां प्रतिपद्य १३।५
तां दृष्टिविषये भर्तुर्मु १५।७९
तां देवतापित्रतिथि २।१६
तान्हत्वा गजकुलबद्ध ९।६५
तां प्रत्यभिव्यक्तमनोर ६।१२
ताभ्यस्तथाविधान्स्वप्ना १०।६४
ताभिर्गर्भः प्रजाभूत्यै १०।५८
तामग्रतस्तामरसान्त ६।३७
तामङ्कमारोप्य कृशाङ्ग १४।२७
तामन्तिकन्यस्तबलि २।२४
तामभ्यगच्छद्रुदितानु १४।७०
तामर्पयामास च शोक १४।८०
तामेकभार्यां परिवाद १४।८६
तां पुण्यदर्शनां दृष्ट्वा १।८६
ताम्बूलीनां दलैस्तत्र ४।४२
ताम्बूलवल्लीपरिणद्ध ६।६४
ताम्रपर्णीसमेतस्य ४।५०
ताम्रोदरेषु पतितं ५।७०
ता राघवं दृष्टिभिरापि ७।१२
तावत्प्रकीर्णाभिनवोप ७।४
तावुभावपि परस्पर ११।८२
तासां मुखैरासवगन्ध ७।११
तासु श्रिया राजपरम्प ६।५
ताः स्वचारित्रमुद्दिश्य प्र १५।७३
ताः स्वमङ्कमधिरोप्य दो १९।४४
तिस्रस्त्रिलोकप्रथितेन ७।३३
तीरस्थली बर्हिभिरुत्क १६।६४
तीर्थे तदीये गजसेतुब १६।३३
तीर्थे तोयव्यतिकरभ ८।९५
तीव्रवेगधुतमार्गवृ ११।१६
ते चतुर्थसहितास्त्रयो ११।५५
ते च प्रापुरुदन्वन्तं १०।६
तेजसः सपदि राशिरु ११।६३
ते तस्य कल्पयामा १७।९
तेन कार्मुकनिषक्तमु ११।७९
तेन दूति विदितं निषे १९।१८
तेन द्विपानामिव पुण्ड १८।८
तेन भूमिनिहितैकको ११।८१

तेन मन्त्रप्रयुक्तेन नि १२।९९
तेनातपत्रामलमण्डले १६।२७
तेनाभिघातरभसस्य ९।६१
तेनावरोधप्रमदास १६।७१
तेनार्थवाँल्लोभपराङ्मु १४।२३
तेनावतीर्य तुरगात्प्र ९।७६
तेनाष्टौ परिगमिताः स ८।९२
तेनोत्तीर्य पथा लङ्कां रो ११।७१
तेनोरुवीर्येण पिता प्रजायै १८।२
ते पुत्रयोर्नैर्ऋतशस्त्र १४।४
ते प्रजानां प्रजानाथा १०।८३
ते प्रीतमनसस्तस्मै या १७।१८
ते बहुज्ञस्य चित्तज्ञे १०।५६
ते रामाय वधोपायमा १५।५
ते रेखाध्वजकुलिशा ४।८८
ते सेतुवार्तागजबन्धमु १६।२
तेऽस्य मुक्तागुणोन्नद्धं मौ १७।२३
तेषां सदश्वभूयिष्ठा ४।७०
तेषां द्वयोर्द्वयोरैक्यं १०।८२
तेषां महार्हासनसंस्थि ६।६
तैः कृतप्रकृतिमुख्यसं १९।५५
तैस्त्रयाणां शितैर्बाणैर्य १२।४८
तैः शिवेषु वसतिर्गता ११।३३
तौ दंपती बहु विलप्य ९।७८
तौ निदेशकरणोद्यतौ ११।४
तौ पितुर्नयनजेन वा ११।५
तौ प्रणामचलकाकपक्ष ११।३१
तौ बलातिबलयोः प्रभा ११।९
तौ समेत्य समये स्थिता ११।५३
तौ सरांसि रसवद्भिर ११।११
तौ सीतान्वेषिणौ गृध्रं लू ११।५४
तौ सकेतुसुतया खिली ११।१४
तौ स्नातकैर्बन्धुमता च ७।२८
तौ विदेहनगरीनिवासि ११।३६
त्यजत मानमलं बत ९।४७
त्यागाय संभृतार्थानां १।७
त्याजितैः फलमुत्खातै ४।३३
त्रस्तेन तार्क्ष्यात्किल कालि ६।४९
त्रिदिवोत्सुकयाप्यवेक्ष्य ८।६०
त्रिलोकनाथेन सदा म २।४५

त्रेताग्निधूमाग्रमलिन्य १३।३७
त्रैलोक्यनाथप्रभवं प्र १६।८१
त्वं रक्षसा भीरु यतोऽप १३।२४
त्वचं स मेध्यां परिधाय ३।३१
त्वया पुरस्तादुपयाचि १३।५३
त्वय्यैवं चिन्त्यमानस्य १।६४
त्वय्यावेशितचित्तानां १०।२७
दक्षिणेन पवनेन सं १९।४३
दधतो मङ्गलक्षौमे वसा १२।८
दयितां यदि तावदन्व ८।५०
दर्पणेषु परिभोगदर्शि १९।२८
दशदिगन्तजिता रघु ९।५
दशरश्मिशतोपमद्यु ८।२९
दशाननकिरीटेभ्य १०।७५
दिग्भ्यो निमन्त्रिताश्चैनम १५।५९
दिने दिने शैवलवन्त्य १६।४६
दिनेषु गच्छत्सु निता ३।८
दिलीपसूनोः स बृह ३।५४
दिलीपानन्तरं राज्ये ४।२
दिवं मरुत्वानिव भो ३।४
दिशः प्रसेदुर्मरुतो ववुः ३।१४
दिशि मन्दायते तेजो ३।४९
दिष्टान्तमाप्स्यति भवान ९।७९
दीर्घेष्वमी नियमिताः ५।७३
दुकूलवासाः स वधूस ७।१९
दुदोह गां स यज्ञाय १।२६
दुरितं दर्शनेन घ्नस्त १७।७४
दुरितैरपि कर्तुमात्म ८।२
दुर्गाणि दुर्ग्रहाण्यासंस्त १७।५२
दुर्जातबन्धुरयमृक्ष १३।७२
दूरादयश्चक्रनिभस्य १३।१५
दूरापवर्जितच्छत्रैस्तस्या १७।७९
दूर्वायवाङ्कुरप्लक्षत्व १७।१२
दृढभक्तिरिति ज्येष्ठे रा १२।१९
दृष्टदोषमपि तन्न सो १९।४९
दृष्टसारमथ रुद्रका ११।४७
दृष्टा विचिन्वता तेन ल १२।६१
दैत्यस्त्रीगण्डलेखानां १०।१२
द्विषां विषह्य काकुत्स्थ ४।४१
द्वेष्योऽपि संमतः शिष्ट १।२८

धनुर्भृतोऽप्यस्य दयार्द्र २।११
धराया तस्य संरम्भं सी १५।८५
धर्मलोपभयाद्राज्ञी १।७६
धातारं तपसा प्रीतं १०।४३
धारास्वनोद्गारिदरीमु १३।४७
धियः समग्रैः स गुणैरु ३।३०
धूमधूम्रो वसागन्धी ज्वा १५।१६
धूमादग्नेः शिखाः पश्चादु १७।३४
धृतिरस्तमिता रतिश्च्यु ८।६६
ध्रुवमस्मि शठः शुचिस्मि ८।४९
ध्वजपटं मदनस्य ध ९।४५
न किलानुययुस्तस्य १।२७
न कृपणा प्रभवत्यपि ९।८
न केवलं गच्छति तस्य १८।४९
न खरो न च भूयसा मृ ८।९
न चावदद्भर्तुरवर्ण १४।५७
न चोपलेभे पूर्वेषा १०।२
न तस्य मण्डले राज्ञो १७।४८
नदत्सु तूर्येष्वविभाव्य ७।३८
नदद्भिः स्निग्धगम्भीरं १७।११
न धर्ममर्थकामाभ्यां ब १७।५७
न नवः प्रभुरा फलोद ८।२२
न पृथग्जनवच्छुचो व ८।९०
न प्रसेहे स रुद्धार्क ४।८२
न प्रहर्तुमलमस्मि निर्द ११।८४
नभश्चरैर्गीतयशाः स ले १८।६
न मृगयाभिरतिर्न दु ९।७
न मे ह्रिया शंसति किं ३।५
नमो विश्वसृजे पूर्वं १०।१६
नयगुणोपचितामिव ९।२७
नयविद्भिर्नवे राज्ञि ४।१०
नरेन्द्रमूलायतनाद ३।३६
नवपल्लवसंस्तरेऽपि ८।५७
नवेन्दुना तन्नभसोपमे १८।३७
न संयतस्तस्य बभूव ३।२०
नातिपर्याप्तमालक्ष्य म १५।१८
नाभिप्ररूढाम्बुरुहासं १३।६
नाम राम इति तुल्यम ११।६८
नाम वल्लभजनस्य ते १९।२४
नाम्भसां कमलशोभिनां ११।१२
निगृह्य शोकं स्वयमेव १४।८५
निग्रहात्स्वसुराप्तानां व १२।५२
निश्चित्य चानन्यनिवृत्ति १४।३५
नितम्बगुर्वी गुरुणा प्र ७।२५
निद्रावशेन भवता ५।६७
निधानगर्भामिव सा ३।९
नियुज्य तं होमतुरंग ३।३८
निर्घातोग्रैः कुञ्जलीनाञ्जि ९।६४
निर्दिष्टां कुलपतिना स १।९५
निर्दोषमभवत्सर्वं १०।७२
निर्बन्धपृष्टः स जगाद १४।३२
निर्बन्धसंजातरुषा ५।२१
निर्ययावथ पौलस्त्यः पु १२।८३
निर्वर्त्यते यैर्नियमा ५।८
निर्वर्त्यैवं दशमुखशि १५।१०३
निर्वाप्य प्रियसंदेशैः १२।६३
निर्विष्टविषयस्नेहः स १२।१
निर्वृत्तजाम्बूनदपट्ट १८।४४
निर्वृष्टलघुभिर्मेघैः ४।१५
निवर्त्य राजा दयितां २।३
निववृते स महार्णव ९।१४
निवातपद्मस्तिमिते ३।१७
निविष्टमुदधेः कूले तं १२।६८
निवेश्य वामं भुजमास ६।१६
निशम्य देवानुचर २।५२
निशाचरोपप्लुतभर्तृका १४।६४
निशासु भास्वत्कलनूपु १६।१२
निःशेषविक्षालितधा ५।४४
निसर्गभिन्नास्पदमेक ६।२९
नीपान्वयः पार्थिव एष ६।४६
नीवारपाकादि कडंग ५।९
नूनं मत्तः परं वंश्याः १।६६
नृत्यं मयूराः कुसुमानि १४।६९
नृपतिः प्रकृतीरवेक्षि ८।१८
नृपतेः प्रतिषिद्धमेव ९।७४
नृपतेर्व्यजनादिभिस्त ८।४०
नृपं तमावर्तमनोज्ञ ६।५२
नृपस्य वर्णाश्रमपाल १४।६७
नेत्रव्रजाः पौरजनस्य ६।७
नेपथ्यदर्शिनश्छाया त १७।२६
नैर्ऋतघ्नमथ मन्त्रवं ११।२१
न्यस्ताक्षरामक्षरभूमि १८।४६
पक्षच्छिदा गोत्रभिदात्त १३।७
पञ्चमं लोकपालानामूचुः १७।७८
पञ्चवट्यां ततो रामः शा १२।३१
पञ्चानामपि भूतानां ४।११
पणबन्धमुखान्गुणान ८।२१
पतिरङ्कनिषण्णया त ८।४२
पत्तिः पदातिं रथिनं र ७।३७
पयोघटैराश्रमबाल १४।७८
पयोधरैः पुण्यजनाङ्ग १३।६०
परकर्मापहः सोऽभूदु १७।६१
परस्पराक्षिसादृश्य १।४०
परस्पराभ्युक्षणतत्प १६।५७
परस्पराविरुद्धास्ते १०।८०
परस्परेण क्षतयोः प्र ७।५३
परस्परेण विज्ञात ४।७९
परस्परेण स्पृहणीय ७।१४
परात्मनोः परिच्छिद्य श १७।५९
पराभिसंधानपरं यद्य १७।७६
परार्घ्यवर्णास्तरणोप ६।४
परिकल्पितसांनिध्या ४।६
परिचयं चललक्ष्य ९।४९
परेण भग्नेऽपि ७।५५
परेषु स्वेषु च क्षिप्तैर २७।५१
पर्णशाला क्षिप्रं वि १२।४०
पर्यन्तसंचारितचा १८।४३
पवनस्यानुकूलत्वा १।४२
पश्यावरोधैः शतशोम १६।५८
पाण्ड्योऽयमंसार्पितलम्ब ६।६०
पात्रीकृतात्मा गुरुसेव १८।३०
पादपाविद्धपरिघः शि १२।७३
पारसीकांस्ततो जेतुं ४।६०
पार्थिवीमुदवहद्रघु ११।५४
पिता पितॄणामनृणस्तम १८।२६
पिता समाराधनतत्परे १८।११
पितुः प्रयत्नात्स समग्र ३।२२
पितुरनन्तरमुत्तर ९।१
पितुर्नियोगाद्वनवास १४।२१
पित्रा दत्तां रुदन्रामः प्रा १२।७

